TRIVANDRUM SANSKRIT SERIES
No. LXXXVI.

# THE BHARATACHARITA

OF

## SRÎ KRISHNAKAVI

EDITED BY
MAHÂMAHÔPADHYÂYA
T. GANAPATI SÂSTRÎ
*Honorary Member of the Royal Asiatic Society of Great Britain and Ireland,*
*Honorary Doctor of Philosophy, University of Tubingen,*
*Curator of the Department for the Publication of*
*Sanskrit Manuscripts, Trivandrum.*



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE.






TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.
1925.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८६.

श्रीकृष्णकविप्रणीतं

# भरतचरितं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
लण्डनपुरस्थराजकीयैष्याखण्डीयविद्यासेवकसमाजपूज्यसभ्यपदभाजा
पिहेच्. डि. (ट्यूबिङ्गन्) पदसत्कृतेन
महामहोपाध्यायेन
त. गणपतिशास्त्रिणा
संशोधितम् ।




तच्च
अनन्तशयने
महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितम् ।

कोलम्बाब्दः ११०१, क्रैस्ताब्दः १९२५.

## PREFACE.

The Kâvya Bharatacharita deals with the legend of Bharatachakravartin, son of Dushshanta. It has a charming and beautiful style and will prove of great use to students. The name of the author is mentioned as Krishnâchârya in one of the manuscripts of this work while in two other manuscripts, as Krishna Kavi; and nothing particular is known about him.

The edition is based on the following three palm leaf manuscripts in Malayalam characters, about a century old.

1. (क) Belonging to Mr. Narayanan Bhattathiri,
Idappalli.

2. (ख) Do. Mr. Narayanan Namburi,
Padinjare Manayathattu Illam,
Vaikam.

3. (ग) Do. Mr. Rajaraja Varma Raja of
Vadakkumkur.

Trivandrum,
22-2-1101.

T. GANAPATI SASTRI.

## निवेदना ।

भरतचरितं नामेदं दुष्षन्तसूनोर्भरतचक्रवर्तिनः कथामाश्रित्य प्रवृत्तं ललितोदारसरसपद्यात्मकं किमप्यपूर्वं काव्यं व्युत्पित्सूनामत्यन्तमुपकारकम् । अस्य कविः कृष्णाचार्य इत्यादर्शे लिखितमस्ति । किन्त्वसौ कदा कस्मिन् देशे स्थित इति न ज्ञातः ।

एतत्संशोधनाधारभूताः ग्रन्थास्तावदेते—

१. इडप्पळ्ळि नारायणन् भट्टतिरिसम्बन्धी क. संज्ञः ।

२. वैक्कं पटिञ्ञारे मनयत्ताट्टु नारायणन् नम्बूरिसकाशादानीतः ख.संज्ञः ।

३. वटक्कंकूर् राजस्वामिको ग. संज्ञः ।

अनन्तशयनम्,
२२-२-१९०१.

त. गणपतिशास्त्री.



TO

HER HIGHNESS

SRI PADMANABHA SEVINI

VANCHI DHARMA VARDHANI

RAJARAJESVARI

SETU LAKSHMI BHAI

MAHARANI REGENT

I

DEDICATE

BY GRACIOUS PERMISSION

THIS EDITION OF

BHARATACHARITA

A CHARMING POEM

OF

KRISHNACHARYA.

॥ श्रीः ॥

श्रीकृष्णकविप्रणीतं

# भरतचरितम् ।

---

## प्रथमः सर्गः ।

स्वस्तिप्रसूरस्तु रसोत्तराणां
छायां मनोज्ञामुपसेदुषीणाम् ।
सञ्चारिणीनां महिताङ्गभाजां
गवां नियन्त्री परदेवता नः ॥ १ ॥

आदेशिकौ पद्यपथोद्यतानां
रत्नाकरौ सूक्तिमहामणीनाम् ।
सन्मार्गसन्दर्शनपुष्पवन्तौ
वन्दे कवीनां प्रथमौ मुनीन्द्रौ ॥ २ ॥

अस्पृष्टदोषा नलिनीव हृष्टा
हारावलीव ग्रथिता गुणौघैः ।
प्रियाङ्कपालीव विमर्दहृद्या
न कालिदासादपरस्य वाणी ॥ ३ ॥

---

१. 'स्वस्तिप्रसूः स्वस्तिजननी । रसोत्तराणां रसः शृङ्गारादिः क्षीरादिकं च तत्प्रधानानाम् । छायां बन्धशोभां देहसान्निवेशशोभां च । सञ्चारिणीनां शिष्यादावुपदेशादिना संक्रमणस्वभावानां समन्ततो गतिमतीनां च । महिताङ्गभाजां पूजितैरङ्गैः कलादिरूपैर्मुखादिरूपैश्च युक्तानाम् । गवां वाचां काव्यादिरूपाणां धेनूनां च । नियन्त्री अधिष्ठात्री पालयित्री च । परदेवता सरस्वती श्रीकृष्णश्च ।

G. P. T. 991. 500. 3-6-1100.          B

जलाशयस्यान्तरगाढमार्ग-
मलब्धबन्धं गिरि चौर्यवृत्त्या ।
लोकेष्वलं कान्तमपूर्वसेतुं
बबन्ध कीर्त्या सह कुन्तलेशः ॥ ४ ॥

प्रदेशवृत्त्यापि महान्तमर्थं
प्रदर्शयन्ती रसमाददाना ।
सा भारवेः सत्पथदीपिकेव
रम्या कृतिः कैरिव नोपजीव्या ॥ ५ ॥

बृहत्कथाकारसुबन्धुबाणाः
केषामिवाश्चर्यपदं न ते स्युः ।
यतः प्रसिद्धैरपि गद्यबन्धैः
श्लोकाननेकान्[1] भुवने वितेनुः ॥ ६ ॥

प्रसादहृद्या हृदये गभीरा
वक्रोक्तिशैलीशबला रसार्द्रा ।
श्रुत्वापि पुंसां हृदयं हरन्ती
कस्यापि वाणी वनिता च वश्या ॥ ७ ॥

का सा कृतिः कस्य रसं प्रसूते
नोचेदपूर्वार्थरसानुकूला ।
नालङ्क्रियामात्रपरा फलाय
भूयात् कवीनां च मृगीदृशां च ॥ ८ ॥

निर्मथ्यमानः सुमनोभिरेव
निष्ठ्यूतपीयूषरसो गभीरः ।

१. 'संख्यान्' ग. पाठः.

सुव्यञ्जितार्थः सुभगावगाहो
गवां निधिः केन निवेशनीयः ॥ ९ ॥

यतो न गृह्णन्ति सतोऽपि दोषा-
नतो दुराराध्यतमा हि सन्तः ।
कामं खलाश्चेदनुरञ्जनीया-
स्ते दोषलोलाः सुलभाश्च दोषाः ॥ १० ॥

सचेतसः सन्ति विमत्सराश्चेद्
गुणाश्च काव्ये यदि नाम सन्ति ।
मिथो मिलन्त्येव न याचनीया
नँ चेद् द्वये कः कथमर्थनीयः ॥ ११ ॥

आसीदनल्पोपलहेमशिल्पा
पुरी प्रतिष्ठानमिति प्रसिद्धा ।
स्ववाहिनीनीरगृहीतपार्श्वा
या रत्नभूषेव भुवो बभासे ॥ १२ ॥

चिरानुभूतं सुरलोकसख्यं
सम्भावयन्ती सुरनिम्नगायाः ।
रराज या पार्श्वनिविष्टपार्श्वा
भुवं गतेवामरराजधानी ॥ १३ ॥

स्तम्भोपमानां मणिगोपुराणां
तुङ्गेषु शृङ्गेषु निवेशितस्य ।
आकाशधाम्नो मणिभित्तिकेव
प्राकारमाला विरराज यत्र ॥ १४ ॥

---

१. 'षान् दुःखानुरोध्यास्तत एव स', २. 'नो' ग. पाठः.

आक्रष्टुकामेव विभूतिमन्या
द्वीपान्तरस्थामपि सारभूताम् ।
चक्रे स्वयं या भृशमुन्नताभि-
रुद्ग्रीविकां सौधपरम्पराभिः ॥ १५ ॥

यत्सालमालम्बितुमम्बुवाहा-
स्तुङ्गाग्रमारोढुमशक्नुवन्तः ।
निम्ने पतित्वा परिखाम्बुपूरे
ममज्जुरम्बुग्रहणेच्छयेव ॥ १६ ॥

तुङ्गानि यस्यां[1] मणिगोपुराणि
विष्वक्कृतद्वारपरम्पराणि ।
महेन्द्रवज्रक्षतजातरन्ध्र-
शैलेन्द्रशङ्कामदिशञ्जनानाम् ॥ १७ ॥

नितम्बबिम्बादिव रत्नसालाद्
गङ्गाम्बुवासो गलितं पुरस्तात् ।
दधार या रत्नकरप्रसारैः
श्लथत्तरङ्गाञ्चलनीविबन्धम् ॥ १८ ॥

विकस्वरा वज्रकरैरसङ्ख्यैः
सौधेषु सौधेषु सुधाभिरामा ।
नोत्तुङ्गभावान्नपरं श्रियापि
या लङ्घयामास पुरीं सुराणाम् ॥ १९ ॥

लक्ष्मीर्गृहीत्वा जलधेः सरत्नाः[2]
पौराङ्गनाव्याजवतीरसङ्ख्याः[3] ।

---

१. 'स्यां' ख. पाठः. २. 'सु', ३. 'व' क. पाठः.

यस्यां हरेर्भीत इवाविवेश
मन्थाचलः सौधगणच्छलेन ॥ २० ॥

प्रासादवातायन(सालि ? जालि)काभि-
र्ज्योत्स्नो[1] गृहीत्वेव कृतानि धात्रा ।
यस्या कलङ्केन विना विरेजु-
र्वक्त्रेन्दुबिम्बानि पुराङ्गनानाम् ॥ २१ ॥

वक्त्रश्रियं वीक्ष्य पुराङ्गनानां
निशासु मन्दाक्षभरादिवेन्दुः ।
विवेश यस्यां प्रतिमाच्छलेन
तिरोबुभूषुर्मणिधामभित्तीः[2] ॥ २२ ॥

कर्णाञ्चलारित्रविधूतपार्श्वै-
र्नागेन्द्रपोतैरतुलैरुपेता ।
सवेगवाहोर्मिविमुक्तफेना
नदीव यस्यां विशिखा विरेजे ॥ २३ ॥

उषेव यान्तर्गतचित्रलेखा
वेश्येव सत्यानृतसञ्चितार्था ।
शैलस्थलीवोद्धतवाहिनीका
नागास्तृता भोगवतीव रेजे ॥ २४ ॥

तूणीव पूर्णा विशिखावलीभि-
र्गङ्गेव विख्यातवसुप्रसूतिः ।
लङ्केव सालाग्रविलम्बितर्क्षा
या रत्नमालेव महापणाढ्यै[3] ॥ २५ ॥

---

१. 'त्स्नां', २. 'त्तिम्' क. पाठः. ३. 'च' क. ख. पाठः.

पद्मानानावर्जितराजहंसाः
पुष्पेषु लोलैर्भ्रमरैः परीताः ।
यस्यां विरेजुर्मणिहेमक्लृप्ताः
शुद्धान्तनार्यो गृहदीर्घिकाश्च ॥ २६ ॥

सौधस्थिताभिः पुरसुन्दरीभि-
र्नम्रीकृता निष्कुटचूतशाखा ।
रराज यस्यां सशिलीमुखालिः
सज्जीकृतेव स्मरचापयष्टिः ॥ २७ ॥

यत्रेन्दुकान्तोपलभित्तिभाभि-
राविष्कृतानामभिसारिकाणाम् ।
स्थूलेन्द्रनीलोपलतोरणानां
छाया बभूवावरणं रजन्याम् ॥ २८ ॥

हरिन्मणिश्यामतृणोलपाढ्यैः
सौवर्णभाण्डोज्ज्वलरश्मिकीर्णैः ।
तुङ्गैर्गृहैर्विश्रमितुं ददौ वा
या मन्दुरामर्कतुरङ्गमाणाम् ॥ २९ ॥

सन्नायकोत्कृष्टगुणा महार्घा
लोकोत्तमालङ्कृतिरस्तदोषा ।
विशुद्धवर्णाश्रमगुम्फिता या
हारावली काव्यक(था ? ला)भिरामा ॥ ३० ॥

तस्यां नगर्यां निजपादपातैः
सम्भावयन् भूमिभृतां शिरांसि ।
आसीत् त्रिलोक्यामिव तिग्मधामा
दुष्षन्तनामा नरपालमौलिः ॥ ३१ ॥

भुजङ्गभीमेन भुजेन यस्य
चिरं धृता वैरिषु[2] भीषणेन ।
धनुर्गुणाकर्षणरञ्जितश्री-
मही समुद्राभरणाङ्गुलीव ॥ ३२ ॥

भूपारिजातं प्रथमं विजित्य
स्थानं तदीयं पुनराददानः ।
आपूरयन्नर्थिजनस्य वाञ्छां
भूपारिजातत्वमयात् स्वयं यः ॥ ३३ ॥

प्रारम्भणात् प्राक् प्रणतेर्गतेर्वा
धनुः शरो वा स्वयमेव यस्य ।
आचार्यकं चक्रतुराजिरङ्गे
प्रणामभाजामपि वेगभाजाम् ॥ ३४ ॥

यस्य श्रियं वीक्ष्य पुरन्दरोऽपि
लघीयसी मत्पदवीति तप्तः ।
अक्ष्णां सहस्रा[3]दपि कालवर्ष-
व्याजेन बाष्पाम्बु मुमोच भूमौ ॥ ३५ ॥

धर्मोऽपि मोक्षप्रवणस्य साक्षा-
दर्थो यशःसञ्चयमुच्चिचीषोः ।
कामः प्रजोत्पत्तिपरस्य चेति
यस्यानुनिष्पत्तिरभूत् त्रिवर्गः[4] ॥ ३६ ॥

अन्तर्हितं कारणमङ्गवृद्धे-
राप्तैः कृतं सुश्रुतशास्त्रशौण्डैः ।

१. 'धुरन्धरेण', २. 'ष्वा' क. ख. पाठः. ३. 'स्रेण स का',
४. 'र्गः ॥ अष्टा' ग. पाठः.

स्फीताङ्कवर्गोऽपि विपाकरम्यं
दधार यो मन्त्रमयं कषायम् ॥ ३७ ॥

अष्टापदैर्यो गिरिशृङ्गकल्पै-
र्दानाम्बुसिक्तैर्जयकुञ्जरैश्च ।
आपूरयामास नितान्तमाशा-
श्चक्रेऽर्थिनां वार्थं वसुन्धरायाः ॥ ३८ ॥

पातालमाप्तो भुवि पूरिताशः
कल्पद्रुमाणां पदवीमतीतः ।
निरन्तरं शौरिपदावलम्बी
यः स्वो यशोराशिरिवाबभासे ॥ ३९ ॥

अस्पृष्टशस्त्रेण जिता बलौघा
न केवलं येन पुरन्दरोऽपि ।
यदायुधानां शतकोटिमेकं
बलं विजेतुं स मुमोच भूयः ॥ ४० ॥

यस्मिन् महीं शासति सागरेषु
भङ्गो विषादः शिखिमण्डलेषु ।
आर्तिप्रवेशो धनुषां गुणेषु
यात्रासु दूष्योद्धरणं बभूव ॥ ४१ ॥

ऋक्ष्वेव मन्त्रप्रसरो बभूव
वृत्तं यजुःष्वेव निवृत्तमासीत् ।
उपद्रवः सामसु नापरत्र
यत्र क्षितित्राणपरे बभूव ॥ ४२ ॥

---

१. 'गंजकु', २. 'स' क. ख. पाठः.

यो वारिराशिप्रशमैकहेतु-
यों वा सहेतिः परतापहेतुः ।
यो वाशु काष्ठार्[1]जितभूरिभूति-
रकृष्णवर्त्मेति मृषा स्तुतोऽभूत् ॥ ४३ ॥

रत्नाकरः सत्त्वविशेषशाली
सहस्रभोगो वसुधां दधानः ।
वित्तेश्वरः पुण्यजनानुयायी
पद्मोद्भवो यश्चतुराननोऽभूत् ॥ ४४ ॥

दुर्गानपेक्षोऽपि शिवानुयातः
कीर्त्तिं दधानोऽप्यजलाधिवासः ।
विशुद्धवृत्तोऽपि च कृष्णकर्मा
यः स्थूललक्षोऽपि च सूक्ष्मवेधी ॥ ४५ ॥

निसर्गसारस्य निधानभूमिः
स्फुरद्गुणग्रामसुखोपसेव्यः ।
अलङ्कृतश्लोकनिमग्नलोको
यः काव्यबन्धश्रियमन्वगच्छत् ॥ ४६ ॥

सचापतूणिः स कदाचिदाज्ञां
जिज्ञासमानो नगरे नरेन्द्रः ।
चचार[2] रात्रौ भुवनैकवीरः
श्रिया [3]वपुष्मानिव पुष्पकेतुः ॥ ४७ ॥

ततः स राजा सुरनिम्नगायां
शुश्राव कोलाहल(म ? मा)[4]म्बुपूरम् ।

---

१. 'र्पि' क. ख. पाठः. २ 'ल' ख. पाठः. ३ 'शरीरीव शरीजन्मा ।' ग. पाठः. ४. 'म्बुघोषम्' क. ग. पाठः.

न चक्षमे तं द्विरदेन्द्रशब्द-
मुद्[1]दृप्तमुच्चैरिव केसरीन्द्रः ॥ ४८ ॥

अलोकयच्चित्ररथं ससार्थं
सहाप्सरोभिर्विहरन्तमप्सु ।
नृपः सयूथं[2] द्विपयूथनाथं
करेणुभिः सार्धमिव प्रविष्टम् ॥ ४९ ॥

शक्रप्रियोऽयं प्रमदासहायः
क्रीडापरश्चेति निवर्तमानम् ।
अरुन्ध गन्धर्वपतिर्नरेन्द्रं
भोगी गरुत्मन्तमिव प्रयान्तम् ॥ ५० ॥

उक्तश्च रोषादिति गर्वितेन
गन्धर्वनाथेन नरेन्द्रनाथः ।
अकालसञ्चारक! दुर्विनीत!
प्राणेषु नूनं विगतस्पृहोऽसि ॥ ५१ ॥

स्वच्छन्दमस्मासु रहो गतेषु
क्रीडाप्रवृत्तेषु घने निशीथे ।
कथं मनुष्यो निविशे[3]त मन्दः
स्वयं दि[4]वाभीत इवातपेषु ॥ ५२ ॥

इत्याददानं सशरं धनुस्तं
प्रत्युत्तरं भूमिपतिर्बभाषे ।
सोढोऽसि पूर्वं वनिताश्रयत्वा-
दवध्यभावाच्च कुशीलवानाम् ॥ ५३ ॥

१. 'द्वृत्तमु' क. पाठः. २. 'थ', ३. 'वेश म', ४. 'निशाभी', ५. 'प्रमदाश्र' ग. पाठः.

इतःपरं निस्त्रप! दृश्यसे चेद्
बाणाः परप्राणहराः प्रमाणम् ।
संसर्गयोग्या यदि वो न मर्त्त्याः
शून्यं पुरं यात[2] वनं वियद्वा ॥ ५४ ॥

इतीरयित्वा स मुमोच पूर्व
सन्धित्सवे[3] चित्ररथाय बाणम् ।
स तेन मुक्तो हृदयं विवेश
हितोपदेशो बलवानिवास्य ॥ ५५ ॥

अविह्वलश्चित्ररथोऽपि तूर्ण-
माकर्णमाकृष्य शरं मुमोच ।
विवेश सोऽपि क्षितिभर्तुरन्तः-
सत्त्वावधिज्ञानकुतूहलीव ॥ ५६ ॥

एवं तयोस्तुल्यबले प्रहारे
चिरं प्रवृत्ते कलहान्तमिच्छन् ।
बलिं त्रिधामेव भुजङ्गमास्त्रै-
र्महारथश्चित्ररथं बबन्ध ॥ ५७ ॥

ततो विहस्ते पतिते च तस्मिन्
विवृद्धमन्युः शतमन्युरेनम् ।
धनुर्गुणाघट्टनधीरनादै-
र्भित्त्वा नभश्चक्रमिवाससाद ॥ ५८ ॥

ततो महेन्द्राचलशृङ्गसाङ्गि-
कोदण्डमेघच्युतबाणवृष्ट्या ।

१. 'ते', २. 'वायतनं' ग. पाठः. ३. 'ते' क. ख. पाठः.

आपूरितः क्षोभविवृद्धसत्त्वः
सद्यो जजृम्भे जगतीशसिन्धुः ॥ ५९ ॥

अवोचदित्थं नरलोकपालः
सविस्मयोऽसौ सुरलोकपालम् ।
अधीश्वरं त्वां सकलस्य जन्तोः
कथं प्रहर्तुं प्रयते बिडौजः! ॥ ६० ॥

इयं हि मां सांशयिकं[1] तनोति
प्रतीक्ष्यता ते प्रतिपक्षता[2] च ।
हविःस्रुचौ वा किमुपाददीत
धनुःशरौ[3] वा किमयं भुजो मे ॥ ६१ ॥

इति ब्रुवन्तं वलभिद् बभाषे
सान्त्वं समन्तोरुपहासवादः ।
विपक्षभावं भजतामवेहि
महीभृतां मन्निदुरं यथार्थम् ॥ ६२ ॥

तथासि चोन्निर्विशयः समीके
मच्चापमुक्तैर्विशिखैरुरस्तः ।
आस्रावयिष्यामि सुधां निपीतां
ययासि जैवातृकतां प्रपन्नः ॥ ६३ ॥

इतीरयित्वा नृपतिः पृषत्कै-
रापादचूडं निचखान शक्रम् ।
आपुङ्खमग्नैः स च तैर्विरेजे
वहन्निवाक्ष्णामपरं सहस्रम् ॥ ६४ ॥

१. 'सं', २. 'क्ष्य', ३. 'रान्' क. ख. पाठः.

ततस्तुराषाडपि गाढविद्धः
शिलीमुखैस्तस्य बिभेद वक्षः ।
तैराहतः सोऽपि विघूर्णितोऽभूत्
कल्पान्तवातैरिव वारिराशिः ॥ ६५ ॥

अस्त्राण्यमर्षादथ योजयन्तं
निवार्य वास्तोष्पतिरेनमूचे ।
सर्वं मयैतत् त्वदनुग्रहार्थं
प्रवर्तितं वृत्तमवेहि राजन्! ॥ ६६ ॥

समुद्गनिक्षिप्तमथोद्गतांशु
बलाहकच्छन्नमिवार्कबिम्बम् ।
तस्मै जगद्दर्शननामधेय-
मादर्शरत्नं मघवा दिदेश ॥ ६७ ॥

आह स्म चेदं यदि चेच्छसि त्वं
दूरास्थितं वस्तु तिरोहितं वा ।
दृश्यं तदास्मिन्नखिलं तवास्तु
दृश्यो भव त्वं च तथाविधेन ॥ ६८ ॥

अथ सकलमहीभृच्चक्रलक्ष्यप्रतापाः
श्रुतिसुखमनुभूय स्तोत्रबन्धं सुराणाम् ।
दिवससुरनराणामीश्वराः स्फीतभासः
प्रययुरुदयशैलं द्यां प्रतिष्ठानकं च ॥ ६९ ॥

इति कृष्णविरचिते भरतचरिते
प्रथमः सर्गः ॥

---

## अथ द्वितीयः सर्गः ।

अथ प्रसादं वलहन्तुरक्षतं
मणौ तनीयस्यपि तेजसां निधौ ।
वटाग्रधाम्नीव हरौ नराधिपः
क्रमाद् विशश्वास विलोकयन् जगत् ॥ १ ॥

स जातु पश्यन् मणिना जगत्त्रयं
विरोधिसत्त्वप्रशमौषधाच्चलम् ।
भवोन्नतानोकहतक्षणोद्धनं[1]
घनान्तरध्वान्तनिरासवासरम् ॥ २ ॥

उपर्युपोढं[2] पृथुलैः पयोधरै-
र्मुनीन्द्रतेजःशिखिधूमसप्रभैः ।
तपःप्रतापैरिव दूरनिर्जितै-
रसम्प्रविष्टं तपनातपोष्मभिः ॥ ३ ॥

उपेतमृक्षैर्घनभावमेदुरं
समुल्लसच्चित्रशिखण्डिमण्डलम् ।
विपक्त्रिमश्रीफलभोगिभिः श्रितं
त्रिथतसमाहारमिवार्पितं क्वचित् ॥ ४ ॥

प्रफुल्लपुन्नागलवङ्गगर्भकं
विनम्रशाखाञ्चलचूर्णकुन्तलम् ।
स्थितं धरित्र्या इव केशसञ्चयं
ददर्श कण्वस्य ऋषेरथाश्रमम् ॥ ५ ॥

अनेकशाखादृढमूलशालिनां
फलप्रदानामपि कार्यतः स्वतः ।

---

१. 'वाहता' क. ख. पाठः. २. 'पेतं पृ' ग. पाठः.

प्रवर्तका यत्र महर्षयोऽभवन्
  महीरुहाणामपि कर्मणामपि ॥ ६ ॥

कपालचर्मानलभस्मलाञ्छनः
  सरित्कुरङ्गाचलभूगुहाश्रयः ।
अहीनवल्लीपरिणाहभूषणः
  श्रिया स्वयं योऽनुचकार शूलिनम् ॥ ७ ॥

शरीरिणीं कान्तिमिवामृतद्युतेः
  सरोरुहाणामिव सारनिर्मितिम् ।
स कामसाम्राज्यकृतामिव श्रियं
  ददर्श तस्मिन् नवयौवनां वधूम् ॥ ८ ॥

मुनीश्वरेणात्मसुतामिवादृतां
  समुद्वहन्तीं [1]कुसुमानि कर्मणे ।
समुल्लसत्पल्लवकान्तिधारिणीं
  तरुं समालम्ब्य लतामिव स्थिताम् ॥ ९ ॥

उपेयुषीं यौवनमत्तकुञ्जरं
  निर[2]ङ्कुशं चेतसि कौतुकावहम् ।
विविक्तरोमावलिदानविप्लवं
  समुन्नयन्तं कुचकुम्भमण्डलम् ॥ १० ॥

स्ववासपद्माश्रय एव पद्मभू-
  स्तदीयकिञ्जल्करजोमधुद्रवैः ।
विनिर्ममे तां सुतनोस्तनुं ध्रुवं
  मुहुर्मुहुर्वीक्ष्य वपुःश्रियं श्रियः ॥ ११ ॥

---

१. 'सुमनोभिरामताम्', २. 'न्तरं चे' क. ख. पाठः.

त्रिलोचनानन्दकरं शरीरिणा
निसर्गसौरभ्यविलोलषट्पदम् ।
सुधामधुस्यन्दि तदीयमाननं
शशाङ्कबि(म्बा)म्बुजयोः (क्रि ? श्रि)यं ययौ ॥

सदन्तमुक्ताधरविद्रुमोज्ज्वलं
महाधनं वैश्रवणाप्तवीक्षणम् ।
न केवलं पद्ममभूत् तदाननं
निधानपद्मं ह्यलकावलम्बनम् ॥ १३ ॥

शिखण्डिनस्ताण्डविनोऽपि चन्द्रका-
स्तदीयकेशश्रियमाप्तुमक्षमाः ।
यतेत तामाप्तुमथापि चामरं
न कस्य बालत्वकृतं हि चापलम् ॥ १४ ॥

विभज्य बिम्बं शशिनः सलाञ्छनं
ललाटपट्टं ललितभ्रु कुर्वता ।
परार्धनीलाङ्कसुधार्द्रलोहितैः
कृतं तदाक्षिद्वितयं नु वेधसा ॥ १५ ॥

तदीयगण्डस्थलरत्नदर्पणौ
क्रमेण वैशद्यविशेषमापतुः ।
प्रकीर्णकर्णोत्पलरेणुराजिभिः
प्रमृज्यमानाविव यौवनश्रिया ॥ १६ ॥

द्विजावली तन्मुखचन्द्रगामिनो
विलोक्य गूढामिव जातमत्सरा ।

छलेन यामिन्यपि रक्तमाननं[1]
न्यधत्त तस्मिन् दशनच्छदात्मना ॥ १७ ॥
अनक्षरा कोकिलगीर्न वल्लकी
स्वतन्त्रचेष्टा परगीः शुकाङ्गना ।
तदुक्तिभङ्गी गलितोक्तिदूषणा[2]
कथं नु ताभिः सदृशी समर्थ्यताम् ॥ १८ ॥
न नाकिनां सद्मनि नापि भूतले
रसातले वापि न रूपमीदृशम् ।
इतीव तत्कम्बुगले शलाकया
लिलेख लेखात्रितयं जगद्गुरुः ॥ १९ ॥
विधूयमाना शनकैर्मनोभुवा
पुनर्भवार्चिःप्रसरार्पितासना[3] ।
विलासडोलेव ललास चञ्चला
भुजद्वयी सा नवयौवनाश्रियः ॥ २० ॥
तदीयपाणिद्वयकान्तिनिर्जितं
क्रमेण दूरोज्झितजीवनाशयम् ।
विमुक्तकोशश्रि विरागमानतं
कुशेशयं नूनमभूत् कुशेशयम् ॥ २१ ॥
स्मरस्य साम्राज्यपदेऽभिषेचनं
विधातुमिच्छन्निव यौवनोदयः ।
न्यधत्त तस्याः स्तनकुम्भयोर्द्वयं
नवेन लावण्यजलेन पूरितम् ॥ २२ ॥

---

१. 'सा' ग. पाठः. २. 'क्त' ख. पाठः. ३. 'रासनार्पिता । वि' क. पाठः.

तदीयमध्यकृशिमैकसाक्षिणी
  रराज रोमावलिरा स्तनान्तरात् ।
अनल्पशिल्पप्रणिधानशालिना
  स्वयम्भुवा सूत्रमषीव योजिता ॥ २३ ॥

तदीयलावण्यपयोधियायिभि-
  र्गभीरनाभीहृद[1]विभ्रमालसैः ।
अगाहि नूनं युवनेत्रनाविकै-
  र्मुहुर्मुहुस्तत्त्रिवलीमहोर्मिषु ॥ २४ ॥

विधाय पीनस्तनभारमुन्नतं
  विधातुकामश्च नितम्बमायतम् ।
तदीयमध्यक्रियया नु डो[2]लया
  ध्रुवं विशश्राम तदन्तरा विधिः ॥ २५ ॥

मनोज्ञवृत्तोरुयुगावलम्बि[3]नं
  [4]नितम्बचक्रं महदक्षहारकम् ।
सुदर्शनं सारमवाप्य मन्मथो
  रथी नु चक्री नु ज[5]गद् वशेऽकरोत् ॥ २६ ॥

महत्परामर्शमनोहरं मुहुः
  सुसन्धि वृत्तं सुकुमारमुज्ज्वलम् ।
ध्रुवं तदूरुद्वयसर्गबन्धनं
  विधाय वेधा यशसामभून्निधिः ॥ २७ ॥

विमर्दनीया रसिकेन रागिणा
  तदीयजङ्घापरिवादिनीद्वयी ।

---

१. 'सं' क. ख. पाठः. २. 'लोमया' क. पाठः. ३. 'म्बि' ग. पाठः. ४. 'मनोज्ञच' क. ख. पाठः. ५. 'जिगाय मेदिनीम् ॥' ग. पाठः.

कथ नु सा सप्तगुणैव नाभवत्
ततोऽधिकैरप्यवलम्बिता गुणैः ॥ २८ ॥

प्रशस्तमस्याः पदकर्म शंसितुं
पदं क्षमं हंसगतान्यपेक्ष्य यत्।
तदस्य सर्गादुपसर्गमग्रत-
श्चकार वेधाः प्रपदं किमाशयः ॥ २९ ॥

त्रपागुणाकृष्टिविनम्रमध्यया
स्मरेण गाढं गुरुणा प्रणुन्नया।
तया च तस्मिन् घनपक्षपातिन-
स्ततः कटाक्षाः प्रथमे निपातिताः ॥ ३० ॥

स्पृहा नु मोहो नु मदो नु मान्मथ-
स्त्रपा नु लीला नु वितर्किता नु वा।
अभूतपूर्वा हृदि कापि विक्रिया
विलोकयन्त्यास्तमनङ्गविभ्रमम् ॥ ३१ ॥

तदक्षियुग्मं घनपक्ष्मसम्पुटे
निरुद्धबाष्पं चिरमास्त निश्चलम्।
निशोदबिन्दुस्थगिताग्रकेसरं
निवातनिष्कम्पमिवोत्पलद्वयम् ॥ ३२ ॥

विलोकयन्ती नियतं पपौ गुणान्
प्रतापमिश्रान् मधुरान् महीभृतः।
अधत्त सा स्वेदजलार्द्रमाननं
यतः सुधासिक्तमिवेन्दुमण्डलम् ॥ ३३ ॥

---

१. 'प' क. पाठः.

प्रतिष्ठितेऽन्तः सदृशे नरेश्वरे
विनिर्गतास्तत्क्षण एव कण्टकाः ।
द्विपेन्द्रहस्ताकृतिचौर्यकातरं
मुहुस्तदूरुद्वितयं विकम्पितम् ॥ ३४ ॥

न वासरैर्न प्रहरेण केवलं
त्रिभिः क्षणैः पञ्चभिरेव वा परैः ।
विनिर्ममे तामयथापुरं वधूं
नृपो नु मारो नु नवं नु यौवनम् ॥ ३५ ॥

विनिःसरन्तः स्पृहया मुहुर्मुहु-
र्वधूकटाक्षास्त्रपया विवर्तिताः ।
अदृष्टपूर्वोऽयमपि श्रुतो भवे-
दितीव कर्णावनुयोक्तुमर्थ्ययुः ॥ ३६ ॥

समुत्सुकाः साहसिनो विनिर्गता
नरेन्द्रदृष्टिप्रतिघातकुण्ठिताः ।
कटाक्षपाताः सुतनोस्तथापि ते
न तस्य नासन् हृदयावभेदिनः ॥ ३७ ॥

तथा हि मन्ये सहसा सुशिक्षिता
कटाक्षसंज्ञाभिरनेन भूभुजा ।
यथाह्यनभ्यस्तचरेऽपि दक्षिणा
बभूव सा मन्मथविभ्रमक्रमे ॥ ३८ ॥

अथ क्षितीशोऽपि वधूं विलोकयन्
विनिर्जिताशेषधनुर्धरः स्वयम् ।

---

१. 'ना' क. पाठः. २. 'न्व' ख. पाठः. ३. 'यायकु', ४. 'माला सु', ५. 'क', ६. 'णौ' ग. पाठः.

[1]तदक्षिकोणेक्षणबाण[2]धौरया
स्मरेण धानुष्कतया व्यजीयत ॥ ३९ ॥

अवेक्षमाणः स्फुटमायतेक्षणां
गतोऽपि सद्योऽनिमिषत्वमद्भुतम् ।
मुहुश्चकाङ्क्षे स सहस्रनेत्रतां
क कामसामग्र्यमगामि कामिभिः ॥ ४० ॥

अभूत् सकम्पं वपुरस्य भूभुजः
श्रमाम्बुसिक्तैः पुलकैरलङ्कृतम् ।
प्रमोदबाष्पस्नपितैर्निपातितै-
र्वधूकटाक्षोत्पलकेसरैरिव ॥ ४१ ॥

महीक्षितस्तामवलोक्य तस्थुषः
स्मरेण [3]भिन्नं कतिधा नु मानसम् ।
न पञ्चधा पञ्चभिरेव सायकै-
र्यतो [4]विकल्पैः शतधावलम्बितम् ॥ ४२ ॥

किमीदृशीयं परमार्थसंभवा
विभावना वा मनसो विमोहिनी ।
अथेन्द्रजालं नु महेन्द्रनिर्मितं
मणेरयं वा महिमैव केवलम् ॥ ४३ ॥

अनल्पशिल्पा यदि सृष्टिरीदृशी
भवेद् विधातुः स्वत एव नैपुणी ।
ततः स्वदाराः खलु सा सरस्वती
स्फुटं विधात्रे स्वयमभ्यसूयति ॥ ४४ ॥

---

१. 'तस्याः सुको', २. 'सा' क. ग. पाठः. ३. 'नु' क. ख. पाठः. ४. 'ल्पाः' ग. पाठः.

कथं तपश्शोषितकामविभ्रमे
तपोवने जन्म लभेत मानिनी ।
दवानलोच्छोषितकुड्मले वने
कथं हि कल्पेत[1] शिरीषमञ्जरी ॥ ४५ ॥

इयं च न क्षत्रपथातिवर्तिनी
क्षमा मनः स्यन्दयितुं हि मादृशाम् ।
सरोजराजिप्रतिमल्लविभ्रमा
शशाङ्करत्नं विमलेव चन्द्रिका ॥ ४६ ॥

स्तनावनुत्पीडितपीनकर्कशौ
न भुक्तमुक्तं दशनच्छदामृतम् ।
दृशौ च नोन्मृष्टपुटे मृगीदृशः
क यूनि पुण्यं महदद्य पच्यते ॥ ४७ ॥

इतीदृशीं तां शतधा विजृम्भितां
विकल्पमालां महतीं महीपतिः ।
अवाप मन्थाचलवातचञ्चलां
पयोधिरुल्लोलपरम्परामिव ॥ ४८ ॥

अथ क्षितीशो क्षणमीलितेक्षणो
मणिः क्षणेनान्तरधीयत स्वयम् ।
मिथस्तयोस्तामनुरागसंपदं
निरीक्षितुं रक्त इवाक्षमः स्फुटम् ॥ ४९ ॥

तदा च साभूत् सहसा तिरोहिता
नृपस्य तस्याश्च तथा बभूव सः ।

---

१. 'ल्प्ये' ख. पाठः.

यतो मिथश्चेतसि तौ ममज्जतु-
स्ततो बहिर्युक्तमदर्शनं तयोः ॥ ५० ॥

अथामुनानन्दसुधारसस्नुता
सुखोदयेन स्मरबन्धुकान्तिना ।
वरेण राज्ञा विरहं गता सती
कुमुद्वतीव ग्लपिता बभूव सा ॥ ५१ ॥

तदीक्षणानन्दजमश्रु शीतलं
यदास्त तस्याः प्रथमं क्रमेण तत् ।
प्रवासदुःखप्रभवेन वह्निना
प्रवर्तितक्काथमिवोष्णतां ययौ ॥ ५२ ॥

सुदीर्घनिःश्वासमरुद्विजृम्भितै-
श्चचाल तस्याः पृथुलं कुचद्वयम् ।
हृदि स्थितानां विरहानलोष्मणां
पुरःस्थितिं सोढुमिवाक्षमं मुहुः ॥ ५३ ॥

विदह्यमानोऽपि वियोगवह्निना
विचित्रमस्याः स्मरसायकव्रणः ।
हृदि स्थितः प्रेमरसायनोक्षितः
शशाम न प्रत्युत विस्तृतिं ययौ ॥ ५४ ॥

तमोमयं विश्वमिवाथ तन्वता
वियोगदुःखेन नवेन सा वधूः ।
विजृम्भमाणेन मुहुर्विपाण्डुरा
बभूव हंसीव घनेन मूर्छिता ॥ ५५ ॥

---

१. 'र्छे' ग. पाठः.

तथा विसंज्ञां पतितां महीतले
समेत्य माध्वीति किलामराङ्गना ।
अबोधयत् तां विरहातुरां वधूं
प्रभेव बाला सवितुः सरोजिनीम् ॥ ५६ ॥

निरुन्धता यातुमिवोद्यतानसून्
मुहुः स्पृशन्त्या शिशिरेण पाणिना ।
तयानुपृष्टा परितापकारणं
शशंस सा बाष्पविकुण्ठितस्वरा ॥ ५७ ॥

स कोऽपि चक्षुष्यतनुः प्रभानिधि-
र्गजेन्द्रगामी मृगराजविक्रमः ।
सुसूक्ष्मदृष्टिः[1] पृथुलायतेक्षणो
विभुर्विनीतश्च युवा मयेक्षितः ॥ ५८ ॥

अहीनमूर्तिः स वसुन्धराधरः
स भूरिकीर्त्तिः कमलोदयाश्रयः ।
स तुङ्गवंशः कृतकार्मुकस्थितिः
स ईश्वरः सम्भृतसर्वमङ्गलः ॥ ५९ ॥

तदाप्रभृत्येव मनः क्व मे गतं
न वेद्मि मान्ये[2]! मदनायुधक्षतम्[3] ।
मनोहरेणोष्मवता विहारिणा
हृतं नु दग्धं नु तिरस्कृतं नु वा ॥ ६० ॥

मनोभवश्चेदयमस्य विग्रहे
क्व भङ्गकारी भविता स ईश्वरः ।

---

१. 'स' क. ख. पाठः. २, ३. 'म' ग. पाठः.

यदीन्दुमूर्त्तिः परिभूतिरस्य का
रविप्रतापैर्भुवनोत्तरैरपि ॥ ६१ ॥

न सर्वथा तेन विनाहमुत्सहे
मनास्विना मत्तगजेन्द्रगामिना ।
निरर्थकान् क्लेशफलानिमानसू-
नजेव वोढुं गलवर्तिनः स्तनान् ॥ ६२ ॥

जगाद माध्वी च तथा व्यथावतीं
तवास्मि मात्रा प्रहिता हिता सखी ।
अहं यतिष्ये युवयोः समागमे
प्रभातवेलेव रथाङ्गसंज्ञयोः ॥ ६३ ॥

स चक्रवर्ती शिशिरांशुवंशज-
स्त्वमप्यपत्यं खलु गाधिजन्मनः ।
तदस्तु वां शक्रशचीप्रकाशयोः
समागमः श्लाघ्यतमो मनीषितः ॥ ६४ ॥

इत्थं गाः शिशिरसुखाः प्रयुज्य माध्वी
[1]तं[2]ता[3]यां प्रियविरहोष्मणा कुमार्याम्[4] ।
बिभ्राणा निबिडपयोधरश्रियं ता-
मभ्रान्तं सपदि यथागतं ययौ च ॥ ६५ ॥

इति कृष्णविरचिते भरतचरिते द्वितीयः सर्गः ॥

---

## अथ तृतीयः सर्गः ।

इत्थं वियोगविधुरः स नरेश्वरोऽपि
सौधे सुधाशशिमणिप्रकराभिरामे ।

---

१. 'सो', २. 'दी', ३. 'याः', ४. 'र्याः' ग. पाठः.

श्रीमानहीनशयने शिशिरे निशायां
दुग्धोदधाविव हरिर्भगवानशेत ॥ १ ॥
योग्यार्थसंघटनकौतुकिनी रसार्द्रा
केनापि भाग्यविभवेन विभाव्यमाना ।
चिन्तापरं तदनु भूपतिमाससाद
माध्वी निसर्गमधुरा कवितेव साध्वी ॥ २ ॥
सा देहभाभिरुपरि प्रविसारिणीभि-
रुल्लोचमम्बरतले न बबन्ध यावत् ।
तावत् स्वतल्पसमतुङ्गमनल्पशिल्प-
मस्यै दिदेश मणिपीठमसौ नरेन्द्रः ॥ ३ ॥
मन्दस्मितार्द्रसुधया स मुहुः क्षरन्त्या
प्रक्षालयन्निव मुखं विरहानलोष्णम् ।
एनामभाषत परिस्फुरताधरेण
सन्दर्शयन्निव बहिर्दयितानुरागम् ॥ ४ ॥
का त्वां विना सुतनु! सम्प्रति मुक्तशोभा
वासस्थली कमलिनीव हतारविन्दा ।
किं तत् कुलं तिलकितं तव जन्मनेति
जिह्रेमि सौहृदवशादनुयोक्तुमिच्छन् ॥ ५ ॥
देवीत्वमाह तव निश्चलनीलनेत्रं
निष्पन्दषट्पदसरोरुहकान्ति वक्त्रम् ।
किं कृत्यमस्ति कृतकृत्यधियस्तवेह
वात्सल्यमाश्रितजने विवृणोषि वा त्वम् ॥ ६ ॥

---

१. 'कि' ख. पाठः. २. 'रि' क. पाठः. ३. 'वीतशो' ग. पाठः. ४. 'रसाद' क. पाठः. ५. 'शी' ख. पाठः.

आह स्म सापि मृदुलस्मितमुद्गिरन्ती
वाग्देवतासरणिसंस्तरणांशुकाभम् ।
माध्वीति[1] वासवगृहे परिचारिकाह-
मामूलतः शृणु ममागमने निमित्तम् ॥ ७ ॥

अभ्यर्थिता वलभिदा किल मेनका सा
मत्प्रेयसी कुशिकसूनुसकाशमेत्य ।
रूपेण तेन भुवनत्रयसुन्दरेण
घोरं जहार हृदयं च तपश्च तस्य ॥ ८ ॥

तस्य प्रसङ्गकृतसङ्गमगर्भयोगात्
कन्यामसूत गुणसङ्घटनाभिरामाम् ।
भूषामणेरपि विभूषणतां दधानां
मुक्ताश्रियं जलनिधेरिव ताम्रपर्णी ॥ ९ ॥

निक्षिप्य वृष्टिरिव सम्पदमुर्वराया-
मुर्व्यां प्रसूतिमथ सा दिवमारुरोह ।
जात्यन्तरैः पिकवधूरिव सा शकुन्तै-
स्त्राता कुमार्यपि जगाम शकुन्तलाख्याम् ॥ १० ॥

सा सान्द्रपल्लवमनोहरकान्तिभारा
भूयः स्वयं करविसृष्टपयःप्रसादा ।
संवर्धिता वनलतेव महर्षिणाभूत्
कण्वेन दैवघटिता करुणापणेन ॥ ११ ॥

सा सम्प्रति प्रथमयौवनभारखिन्ना
त्वां वीक्ष्य मन्मथविधेयतनुः कुमारी ।

---

१. 'च' क. पाठः.

धत्ते पयोधरतटे चिरमश्रुबिन्दून्
मुक्तामणीनिव भवद्गुणलब्धगुम्फान् ॥ १२ ॥

स्निग्धो जनः किमुत तां विरहाभितप्तां
वीक्ष्य द्विषन्नपि न जीवितुमुत्सहेत ।
सा तु स्वयं विशति कां नु दशां न जाने
मां पश्य वेपथुमतीमतिचिन्तनेन ॥ १३ ॥

सा प्रत्यहं विरहतिग्मरुचा गृहीता
बालापि पाण्डुरतनुः कृशिमानमेति ।
प्रस्निग्धपुष्करपुटे परिवर्तमाना
पीयूषदीधितिकलेव विलासशेषा ॥ १४ ॥

निद्रां न याति यदि याति सरोमहर्षा
सानन्दबाष्पनयना सुखमानमय्य ।
व्रीलावशादभिमतान्यपि चुम्बनानि
बाला रुणद्धि नभसि प्रविसार्य पाणिम् ॥ १५ ॥

प्रापय्य मामभिमतं जनमाशु दीनां
निद्रा सखीव निपुणा स्वयमेव याता ।
एतावदेव हि सहायजनस्य कृत्यं
मद्भाग्यमन्यदिति शोचति सा विनिद्रा ॥ १६ ॥

दुग्धोदधौ विषविषादविमूर्छितेषु
देवेषु कैतवमकारि शिवेन किञ्चित् ।
पीतः सुधांशुरविषह्यरसस्तु मन्ये
नीतः सुधांशुपदवीं स च कालकूटः ॥ १७ ॥

---

१. 'त' कं. पाठः.

यद्वायमप्ययपर एव विषावतारः
सन्दर्शयन्निजममुं हृदि कालिमानम् ।
दिग्धो बहिः सततमब्धिकफेन पाण्डु-
राविर्भवञ्जलनिधेर्हिमधामनामा ॥ १८ ॥

आहो स्वयं परिणतः शनकैर्विषात्मा
राहोर्मुहुर्निगरणोद्गरणैर्मृगाङ्कः ।
इत्थं निरीक्ष्य निजतापकरं निशायां
सास्रा हिमद्युतिमुपालभते मृगाक्षी ॥ १९ ॥

वाताशनैर्विषधरैः पथि चन्दनस्थै-
र्भुक्तोज्झिता इव विषच्छुरिताः स्पृशन्तः ।
मन्दानिलाः सरसचन्दनगन्धगर्भा-
स्तां मूर्छयन्ति हिमनिर्झरशीकरार्द्राः ॥ २० ॥

दोषार्थिनी कुमुदिनी विमुखी च मित्रे
सन्तापयेत् कुमदपाण्डुमृदुस्मितां ताम् ।
नो युज्यते तपति यत् प्रतिमुक्तदोषा
मित्रप्रिया कमलिनी कमलायताक्षीम् ॥ २१ ॥

चूताङ्कुराः स्मरशराः स्वयमेव नैव
तेषां रसाः परिणताश्च त एव मन्ये ।
यत् कोकिलास्तदुपभोगविशुद्धशब्दैः
कण्ठैस्तुदन्ति शतधा हृदयं तरुण्याः ॥ २२ ॥

सा स्वस्ति कीर्तयति चन्द्रकराभितप्ता
ज्योत्स्नाशिने निशि चकोरकुलाय बाला ।

भूयस्तरामसितपक्षसमागमाय
यत्र स्वयं विलयमेति शनैः शशाङ्कः ॥ २३ ॥

एषा कथा हिमरुचः कुमुदाकरस्य
पद्माकरस्य मलयद्रुममारुतस्य ।
तत् केन तापहरणेन सखीजनोऽपि
तस्यास्तनोत्वनुगुणं शिशिरोपचारम् ॥ २४ ॥

आरोपितः स्मरकृशानुमये कृशाङ्ग्या
निष्यन्दमानपृषतो हृदि चन्द्रकान्तः ।
सन्तापधूममलिनीकृतवर्णकान्तिः
सद्यः पुरन्दरमणित्वमुपैति वानः ॥ २५ ॥

तल्पीकृतानि सरसोत्पलपल्लवानि
चूर्णीकृतानि परिशोषणमर्मराणि ।
अङ्गेषु मन्मथशरव्रणविह्वलेषु
लेपीभवन्ति सुदृशः श्रमजोक्षितानि ॥ २६ ॥

युक्तं तदेव बिसिनीदलमारुतस्तु
साचिव्यमाचरति यद् विरहानलस्य ।
पाथस्तु शीतलमभिज्वलनं यदस्य
तन्नोचितं भवति सर्पिरिवायताक्ष्याः ॥ २७ ॥

विश्वम्भरेश्वर ! कृतं बहुभाषितेन
न त्वां विना शरणमस्ति शकुन्तलायाः ।
क्लिष्टा कथं निशि कठोरतुषारपातै-
रर्कं विना कमलिनी लभते विकासम् ॥ २८ ॥

इत्थं निवेद्य विरहातुरतामसह्यां
माध्वी मुनीन्द्रदुहितुर्मनुजेश्वराय ।
तस्मै गिरामवसरं दिशती निवृत्ता
वीणेव शङ्[1]खनिनदाय विजृम्भिताय ॥ २९ ॥

राजा च[2] बाष्पचयकुण्ठितधीरनादः
सद्यः प्रमृष्टवदनो मृदुना क्रमेण ।
आसारसिक्त इव दुन्दुभिरक्षमोऽपि
शब्दान् कथकथमपि प्रथमं च[3]कार ॥ ३० ॥

गाढं कयापि करुणालतयानुकृष्टा
मद्भाग्यमारुतपरम्परया च नुन्ना ।
प्राप्तासि दुस्तरवियोगतरङ्गदुर्गे
शोकार्णवे मयि निमज्जति नौरिव त्वम् ॥ ३१ ॥

अन्तर्घनोष्ण[4]भरदुर्वहजीवनस्य
सा मत्परेति मधुरोत्तरशब्दरम्या ।
वृष्टिर्नवेव महती कमलाकरस्य
सञ्जीवनं मम भवत्यधुना करोति ॥ ३२ ॥

यद्वा करोति भवती परितापवृद्धि-
माशामिमां हृदि निबध्य गुणैः प्रियायाः ।
यां गीतिकामिव विधाय शरीरजन्मा
मत्प्राणकातरकुरङ्गकुलं रुणद्धि ॥ ३३ ॥

---

१. 'वाचनि' ख. ग पाठः. २. 'पि', ३. 'प्रपेदे', ४. 'ष्म' ग. पाठः.

नायं क्षमोऽहमपि साहसमस्य सोढुं
बाला कथं विषहते विषमायुधस्य ।
ग्रीष्मेण शुष्यति महीरुहि सप्रकाण्डे
कां कां दशां व्रजति कोमलनागवल्ली ॥ ३४ ॥

अस्पृष्टमन्मथकथासु तपस्विनीषु
क्षेमङ्करीष्वनुपजातविनोदलेशा ।
बाला नवोत्पलमृणालशिरीषमृद्वी
गच्छेत् कथं न मदनव्यसनातिभूमिम् ॥ ३५ ॥

कामः पुमानलसलोलविलोचनां तां
पश्यन् कथं रसनिधिः प्रसभं क्षिणोति ।
यद्वा पुरान्तकललाटविलोचनाग्नौ
निर्दग्धमार्दवगुणः कठिनोऽयमासीत् ॥ ३६ ॥

इत्थं कथामनिगमय्य निमीलिताक्षे
राज्ञि स्थिते स्तिमितचेतसि भावनार्द्रे ।
निद्रा दृशः पदमवाप शनैः प्रियेव
माध्वी गता परिणतेन्दुमुखी निशा च ॥ ३७ ॥

उद्भूतकीर्त्तिमथ गौरगुणाभिरामं
सेवानुकूलसमयोत्सुकराजहंसम् ।
पद्माकरं मधुकरा इव वन्दिनस्तं
प्राबोधयन्निति मनोहरगीतिभाजः ॥ ३८ ॥

राजेन्द्र! जागृहि विभातवती त्रियामा
विज्ञापनामनुगुणामवधारयैनाम् ।

---

१. 'यानं क्ष' क. पाठः.

भास्वानिवाम्बुरुहकुड्मलगर्भसंस्थां
लक्ष्मीं विनोदय विलोचनयोर्निलीनाम् ॥ ३९ ॥

प्राभातिकेन पवनेन विधूयमानैः
पद्मैर्मुखैरिव रसाकुलितैर्नलिन्यः ।
आकर्णयन्ति मृदुषट्पदगीतिमेतत्[1]
स्तोकोन्नतैकदलकर्णकृतावधानाः ॥ ४० ॥

भूत्वा पुरा सकलभोग्यमनोहरश्रीः
सन्मार्गवृत्तिरपनीतजनोपतापः[2] ।
सम्प्रत्यसौ कुलगुरुस्त्वयि दत्तभारः
संन्यस्यतीव वसुजालमशेषमिन्दुः ॥ ४१ ॥

कान्तारुणाग्रकरसूक्ष्मविपाटितानि
रेखाङ्कितोन्नतमुखानि सरोजिनीनाम् ।
पद्मानि बिभ्रति शनैः स्तनकुड्मलानां
कान्तिं शशाप्लुतकमुद्रितचूचुकानाम् ॥ ४२ ॥

पीत्वा लतासु विविधासु मधूनि रात्रौ
सम्प्रत्यमी कमलिनीमुपलालयन्तः ।
निद्रोन्मुखीं कुमुदिनीमपरित्यजन्त-
स्तां भ्रामरं जहति वृत्तिमहो नु[3] भृङ्गाः ॥ ४३ ॥

भुक्तं द्विजैर्बहुमतैर्वसुजालमस्य
दत्ता च कैरवकुलेषु परामुना श्रीः ।

१. 'तिमेतां' ग. पाठः. २. 'निजेप', ३. 'नु' ख. पाठः.

आर्द्रीभवत्यपि दृषत् कठिनास्य योगे
सोऽपि स्वयं पतति कालवशान्मृगाङ्कः ॥ ४४ ॥

रात्रेः प्रयाणशिथिलं शिथिलोडुचक्र-
मामोदलुब्धमधुपाकुलमन्धकारम् ।
आक्रष्टुमिच्छति करैरतिरागलोलै-
र्विस्रस्तपुष्पमिव केशकलापमर्कः ॥ ४५ ॥

स्तोकोद्गतोऽपि रविरेष सरोजिनीषु
पुष्णाति सम्पदमपास्यति कोकशोकम् ।
तेजस्विनामनतिलङ्घ्यमहोदयाना-
मीषत्कराः खलु भवन्ति परोपकाराः ॥ ४६ ॥

आमोदलोलुपशिलीमुखपातभीत्या
निद्रां मदार्द्रमभिवेष्ट्य कटं करेण ।
आलानरोधपरिजिह्मितपार्श्वशय्याः
स्तम्बेरमाः स्तिमितकर्णममी वहन्ति ॥ ४७ ॥

वाहानिह क्षणसुषुप्तविनीतनिद्रा-
नभ्यर्णवर्तिबडबेक्षणजातहेषान् ।
आधूतशिञ्जितनिगालविलम्बिभाण्डान्
हा[2]हो[3]रवेण शमयन्ति तुरङ्गपालाः ॥ ४८ ॥

श्लिष्टं यदीरितमुपश्रुति मुग्धवध्वा
साशङ्कया प्रियतमं प्रति निःशलाके ।
तत् तारतारमधुना शतशः पठन्तः
कीराः किरन्ति पिशुना इव मन्त्रगुह्यम् ॥ ४९ ॥

---

१. 'ति' ख. पाठः. २. 'होहोर' ग. पाठः. ३. 'हा' ख. पाठः.

सद्यः सिद्धमनिष्टहारि हितकृत् कोष्णं हिमोच्छेदनं
मन्दोद्दालितमम्बरे दहनकृद् ग्राव्णां गणेऽप्याहितम् ।
दोषोत्सादनमादधाति रुचिकृत् तेजोमयं भेषजं
नेतुं लोकमनातुरत्वमधुना वैद्योऽयमाद्यो रविः ॥ ५० ॥

इति सुखमवबोधितोऽथ सूतैः
सुविहितनित्यविधिक्रमो नरेन्द्रः ।
अभजत कनकासनं सभायां
हरिरिति हरेरुदयाद्रिमर्यमा च ॥ ५१ ॥

इति कृष्णविरचिते भरतचरिते
तृतीयः सर्गः ॥

---

## अथ चतुर्थः सर्गः ।

अथ विश्वम्भरां बाहुरनायासेन भूपतेः ।
दधार तस्य हृदयमायासेन शकुन्तलाम् ॥ १ ॥

स विशुद्धगुणोल्लासिहृदयालम्ब्यपि[1] स्वयम् ।
दुष्प्रापमनुपायेन कन्यारत्नममन्यत ॥ २ ॥

दुष्टसत्त्वप्रशमनीं सैनिकानन्दकारिणीम् ।
ऐच्छत् स मृगयां कर्त्तुमङ्गव्यायामदायिनीम् ॥ ३ ॥

अथ विश्वास्यधिषणः शतकोटिबलं वहन् ।
उत्तस्थौ लोकपाले(श ? शः) शैलव्यालजिघांसया ॥ ४ ॥

ससम्भ्रमजनोत्थानविजृम्भितघनध्वानि ।
भेजे तदा तदास्थानं प्रावृडम्बरडम्बरम् ॥ ५ ॥

---

१. 'हृ', २. 'ह्यच' ग. पाठः

सचिवालम्बितकरः पृथ्वीमारूढपादुकः ।
रक्तामपि स रक्ताभ्यां पद्भ्यां क्षणमरञ्जयत् ॥ ६ ॥

उत्सारिता वेत्रधरैर्जनता मण्डलीकृता ।
जङ्गमा भित्तिकेवास्य रेजे पर्यन्तचारिणी ॥ ७ ॥

स यात्रायामभूत् सद्यः प्रस्फुरद्दक्षिणेक्षणः ।
हृदयं तु बभूवास्य स्फुरद्वामेक्षणं सदा ॥ ८ ॥

पृथ्वक्षं हेमरुचिरमहीनमणिमण्डनम् ।
आरुरोह रथं सोऽथ गरुत्मन्तमिवाच्युतः ॥ ९ ॥

हेषाः कल्याणशंसिन्यो रथ्यानां तस्य निर्गमे ।
जयेति वन्दिनां घोषं तथेति प्रतिशुश्रुवुः ॥ १० ॥

शब्दसंत्रासितारातिः सदाकृतयुगस्थितिः ।
चक्रवर्ती रथस्तस्य यातुः स्वयमिवाबभौ ॥ ११ ॥

तस्य रेजे सितच्छत्रं हारतारांशुकोज्ज्वलम् ।
राजश्रीलब्धसौभ्रात्रमिन्दुबिम्बमिवोद्गतम् ॥ १२ ॥

पार्श्वयोस्तस्य बभ्राम धवलं चामरद्वयम् ।
मन्दहासबिसोत्सा(?)हेहंसयुग्ममिवाकुलम् ॥ १३ ॥

मर्यादास्थापितामुर्वीमधिष्ठाय समुत्थितम् ।
वाहिन्यस्तमसेवन्त रत्नानामाकरं पतिम् ॥ १४ ॥

रत्नचित्रितकोदण्डाः श्यामतूणीरकञ्चुकाः ।
योधास्तमन्वसेवन्त सेन्द्रचापाम्बराश्रियः ॥ १५ ॥

तस्य चित्रपदन्यासाः सालङ्कारा गुणोत्तराः ।
प्रयुक्ताः कुशलैरश्वाः प्रबन्धा इव रेजिरे ॥ १६ ॥

पञ्चधाराविशेषज्ञैः सादिभिः परिचोदिताः ।
सत्त्ववन्तोऽपि तुरगाश्चक्रुर्व्योम रजोमयम् ॥ १७ ॥

तच्चामरलसत्पार्श्वमश्वीयं नैव केवलम् ।
दिवि तत्खुरघोषोऽपि चकारोच्चैःश्रवोगतिम् ॥ १८ ॥

राजेन्दुं भूषयामासुः श्यामास्ताः करिणां घटाः ।
मुक्तादामपरिस्तोमाः सतारा इव रात्रयः ॥ १९ ॥

रत्नहेमलसत्तुङ्गदन्तोल्लसितपुष्कराः ।
रेजिरे वेणुकाक्रान्तास्ते शैला इव दन्तिनः ॥ २० ॥

अपि तान् दानसुमुखान् मानोत्तुङ्गान् महाधनान् ।
परिजहुस्तदुचितं मातङ्गान् मार्गवर्तिनः ॥ २१ ॥

कुम्भनिक्षिप्तरत्नौघास्तोत्रारित्रप्रधाविताः ।
ते पोतभावमभजन् नागाः परिणता अपि ॥ २२ ॥

मुक्ताः संयोजिताः साधु गुणवद्धीरनायकाः ।
हारा इव रथास्तस्य तां सेनां समभूषयन् ॥ २३ ॥

सूत्रकारकृतारम्भाः पताकास्थापनान्विताः ।
नाट्यबन्धा इव रथास्ते रेजुस्तुङ्गनायकाः ॥ २४ ॥

ततस्ततकरो दिक्षु प्रतापनिधिरुज्ज्वलः ।
स भेजे विशिखां दीर्घां भास्वानिव नभःस्थलीम् ॥ २५ ॥

लघवस्तस्य मलिनाः क्षुद्राः स्यन्दनपांसवः ।
अग्रादग्रादनीयन्त दुर्जना इव वायुना ॥ २६ ॥

---

१. 'संचारणावे' ख. पाठः. २. 'वनस्थ' क. ग. पाठः.

तस्येन्दोरिव नाथस्य लाजवर्षाणि पार्श्वयोः ।
नक्षत्राणीव यामिन्यः काभिन्यस्तैत्र[1] तेनिरे[2] ॥ २७ ॥
प्रयाणपटहस्तस्य नर्तयन् गृह[3]बर्हिणः[4] ।
दध्वान चक्षुःश्रवसः शेषस्योल्लासयन् दृशः ॥ २८ ॥
ततो नगर्याः श्रीमत्याः शतधा निःसरद् बलम् ।
अपर्यन्तमभूत्[5] तस्य सुरभेरिव दोहनम् ॥ २९ ॥
अथ नौभिस्त्रिपथगामगाधां साधुसेविताम् ।
स ततारा‍ङ्गविद्याभिस्त्रयीमिव जगद्धिताम् ॥ ३० ॥
अगजां सगजा तस्य सभङ्गां भङ्गवर्जिता ।
वाहिनीं वाहिना चैनां स्पर्धयेवात्यलङ्घयत् ॥ ३१ ॥
तस्य सेना पुरो यान्ती दूरं[6]दूरप्रसारिता[7] ।
उदितस्येव सवितुश्चकाशे दीधितिच्छटा ॥ ३२ ॥
सद्यः शाङ्कुलिकोत्खातशङ्कुकण्टकशर्कराः ।
आ हिमाद्रेः सुपन्थानः कल्पितास्तस्य शिल्पिभिः ॥३३ ॥
रम्योरुकदलीकाण्डां कलकीरस्वरान्विताम् ।
पयोधरतटास्तीर्णां कल्याणक्षेत्रलक्षणाम् ॥ ३४ ॥
विशालवृत्त्यावक्षिप्तमृगपूगविलोकनाम् ।
कलमालीकृताश्वासस्वकर्षकयुवेक्षिताम् ॥ ३५ ॥
कमलोत्पलसंभिन्नकुल्याम्भोमालभारिणीम् ।
स वर्त्मनि ययौ प्रौढां पश्यन् नारीमिवोर्वराम् ॥ ३६ ॥

---

१. 'यामिन्यस्तत्र भानीव का', २. 'स्ताः प्रते' क. पाठः. ३. 'गु', ४. 'णम्' ग. पाठः. ५. 'स्त' ख. पाठः. ६. 'रं', ७. 'णी' ग. पाठः.

अनतिक्रान्तमर्यादान् समृद्धबहुजीवनान् ।
स विद्वद्वीरसंपूर्णानपश्यद्ग्रामवारिधीन् ॥ ३७ ॥

स तेष्वात्मयशःक्षौमवयनस्तम्भसन्ततिम् ।
सप्ततन्तुशताकीर्णा मेने यूपपरम्पराम् ॥ ३८ ॥

द्वयमेवाग्रहीत् तेभ्यो विद्वद्दत्तमुपायनम् ।
फलमारामवल्लीनामाशिषां च विशां पतिः ॥ ३९ ॥

स बलाक्रान्तकाष्ठान्तः शरीरीव विभावसुः ।
आलोलहेतिसङ्घातस्ततो वनमगाहत ॥ ४० ॥

तद् वनं क्षुभितव्यालं वागुरारुद्धदिङ्मुखम् ।
कृतमेकपथं व्याधैः सेतुरुद्धमिवोदकम् ॥ ४१ ॥

वाममुत्क्षिप्य दोर्दण्डं सकोदण्डमुदाननाः ।
तस्मिन्नुच्चुक्रुशुर्व्याधाश्चालयन्तस्ततो मृगान् ॥ ४२ ॥

सिंहशार्दूलसारङ्गवराहशरभाम्भसि ।
हरन्तः प्राणशफरान् विविशुस्तस्य पत्रिणः ॥ ४३ ॥

नरेन्द्रवीतिहोत्रस्य हेतिव्रातेषु केवलम् ।
वनावनिविनिर्यातैः शरभैः शलभायितम् ॥ ४४ ॥

एकैकया बाणसूच्या क्षरत्क्षतजसूत्रया ।
हारा इव मृगाः प्रोतास्तेन रेजुः शतं शतम् ॥ ४५ ॥

निर्भिद्य हत्वा हर्यक्षं निर्गतस्तस्य मार्गणः ।
निर्यातानिव तत्प्राणानन्वेष्टुमविशन्महीम् ॥ ४६ ॥

पुण्डरीककुलं तेन गाढलग्नशिलीमुखम् ।
राजहंसेन सहसा लीलयैव निपातितम् ॥ ४७ ॥

---

१. 'स' ख. पाठः.

आक्रान्तवनमातङ्गकुम्भप्रोतनखाङ्कुशम्[1] ।
स सिंहमिषुणा कञ्चिदाधोरणमिवावधीत् ॥ ४८ ॥
अग्रेषूपरि पादानां पुरस्तिर्यक् च कीलिता ।
शरभस्य तनुस्तेन शरैः खट्वेव शायिता ॥ ४९ ॥
परिशोषयितुं स्वीयं भूदारत्वमसंशयम् ।
आजघान स भूदारानारण्यानपि पार्थिवः ॥ ५० ॥
कम्पयामास मूर्धानं शार्दूलः शरकीलितः ।
श्लाघयन्निव भूभर्तुश्चलल्लक्षेषु दक्षताम् ॥ ५१ ॥
तस्य गाढप्रहारेण केसरी[2] कोऽपि मर्दितः ।
त्यक्तप्रभञ्जनक्रौर्यो निद्रां द्राघीयसीं ययौ ॥ ५२ ॥
पतत्सु[3] मृगराजेषु तेषामिव परिच्छदम् ।
जहार नृपतिर्गौरं चमरीभ्यः प्रकीर्णकम् ॥ ५३ ॥
तेन कोदण्डकुटिलं विषाणयुगमुच्छ्रितम् ।
कृतं वन्यलुलायानां सज्याबन्धमिवेषुभिः ॥ ५४ ॥
गहनं हृदयं तस्य स विपक्षस्य भूभृतः ।
इति निःसत्त्वतां नीत्वा धनुर्गुणमेवाक्षिपत् ॥ ५५ ॥
ततः स वान्तफेनेषु[6] वाहेषु तपनोष्मणा ।
उदन्यार्तेषु सैन्येषु पाथःपथमगाहत ॥ ५६ ॥
ददर्श च सरः स्वच्छमिन्द्रोत्खाताह्वयं नृपः ।
सप्तानामिव सिन्धूनां पाथःसारमिवोद्धृतम् ॥ ५७ ॥

---

१. 'खांशुकम्' क. पाठः. २. 'मृदितः कोऽपि केसरी ।' ख. पाठः. ३. 'तपत्सु', ४. 'णा' ग. पाठः. ५. 'मि' क. पाठः. ६. 'वानवेगेषु', ७. 'च्छं मिश्रोत्खा' ग. पाठः.

अच्छैर्वीचिपटच्छेदैरासक्ताम्बुजरेणुभिः ।
उन्मृज्यमानं मरुता त्रिलोक्या इव दर्पणम् ॥ ५८ ॥
चन्दनालेपसरसमुरस्स्थलमिव क्षितेः ।
चर्मनिर्मोकधवलमधःक्षिप्तमिवाम्बरम् ॥ ५९ ॥
प्रबुद्धकमलालोलमनन्तभुवनास्पदम्[1] ।
हरिरूपमिव प्राप्तं मत्स्यकच्छपविग्रहम् ॥ ६० ॥
स्वर्णसारचितं रम्यं भोगिलोककृताश्रयम् ।
उद्धतामरसेनाढ्यं मेरुशृङ्गमिवापरम् ॥ ६१ ॥
अगस्त्यपानभीतानां निभृतानामुदन्वताम् ।
पयश्चक्रमिवान्यत्र सरोभावमुपाश्रितम् ॥ ६२ ॥
पतिप्रेमरसैः पूर्णमुर्व्येव हृदयं निजम् ।
संदर्शितमिवामुष्य पत्युः सन्तापशान्तये ॥ ६३ ॥
वारिहारमयं गौरं प्रतिबिम्बाम्बरावृतम्[2] ।
रसातलसमुद्रस्थमुपायनमिव क्षितेः ॥ ६४ ॥
शिलीमुखगणाकीर्णं कलहंसमहाध्वनि ।
व्यूहद्वारमिवोद्भ्रान्तवाहिनीशतनिर्गमम् ॥ ६५ ॥
उद्दण्डपुण्डरीकौघमन्तर्व्याप्तमहापदम् ।
महारण्यमिव स्वादुशीतामलकमुन्नतम्[3] ॥ ६६ ॥
प्रतिसङ्क्रमणभ्रान्त्या सुमन्दराविराजितम् ।
अन्तर्नवसुधापूर्णम*नुकुर्वाणमम्बुधिम् ॥ ६७ ॥

१. 'मन्तर्गुप्त', २. 'धराहृतम्' ग. पाठः. ३. 'तम् । अन्त' क. पाठः.

* अनुकुर्वाणम् अनुकरणशीलम् । ताच्छील्ये चानश् । अतः 'अनुपराभ्यां कृञः' ( १. ३. ७९) इति परस्मैपदाकरणमिहादुष्टम् ।

अदृष्टान्तमपि व्यासं दृश्यमप्यप्रमाणकम् ।
विपरीतमपि प्रेयः ससत्त्वमपि चञ्चलम् ॥ ६८ ॥

स्फीतजीवनमाशास्थमम्बरोन्नास्यपां वरम् ।
लघुकं सारसहितं रम्यं बहुपयोन्वितम् ॥ ६९ ॥

मन्ये यद्युदधिस्तावान्न शतांशमपि क्षमाः ।
पातुं बन्धुं लङ्घयितुं मुनिरामप्लवङ्गमाः ॥ ७० ॥

मन्ये तद्भुवनं मातुं प्रवृद्धोऽपि हरिः स्वयम् ।
पौरुषेणापि मानेन (न) क्षमः किमुत क्रमैः ॥ ७१ ॥

यस्याद्यन्तौ परिच्छेत्तुं हरिर्ब्रह्मा च न क्षमौ ।
नूनं तस्यापि देवस्य पर्याप्तं मज्जनाय तत् ॥ ७२ ॥

न मुनेः श्रवसा धार्यं नोदरेणापि कस्यचित् ।
अदस्त्वमितमेवाम्भस्तदन्यन्मानसम्मितम् ॥ ७३ ॥

अधोभुवनमप्येतत् पातालादतिरिच्यते ।
हिमोदास्पदमेवेदमहिमोदास्पदं हि तत् ॥ ७४ ॥

अनिर्मुषितपीयूषमनुद्धृ[1]तहिमाकरम् ।
इदमप्रोषितश्रीकमपूर्वमुदधेः पयः ॥ ७५ ॥

अक्षुण्णलघु तत्तोयमनुद्गालितनिर्मलम् ।
अवीजिताहिमस्पर्शमसंस्कृतरसावहम् ॥ ७६ ॥

दृष्ट्वा च तत् सरो गौरं यशः स्फीतमिवात्मनः ।
अवरुह्य रथात् सेना विश्रमायादिदेश सः ॥ ७७ ॥

अथाधिष्ठातृभिः सेनाः प्रष्ठानाहूय सत्वरम् ।
सरःपरिसरे तत्र यथास्थानं निवेशिताः ॥ ७८ ॥

---

१. 'वृत्ताहि' ख. पाठः.

तन्निधानमपां प्राप्य जनता मुमुदे तदा ।
चातकालीव तृषिता साम्बुवाहं नभस्तलम्[1] ॥ ७९ ॥

अथ राजाप्युपस्पृश्य कृत्वा माध्याह्निकीं क्रियाम् ।
पपौ बि[2]सरसोन्मिश्रं पयो हंस इवामलम् ॥ ८० ॥

तदनु सरसस्तीरे तस्मिन् नवोत्कलतागृहे
फणिपतिफणाभोगे तल्पे सुखासनमास्थितः ।
बलभरपरिश्रान्तं पार्थो ददर्श निशां पति-
र्मधुरिपुरिव क्षीराम्भोधेर्गिरि क्षुभितं पयः ॥ ८१ ॥

इति कृष्णविरचिते भरतचरिते चतुर्थः सर्गः ॥

---

## अथ पञ्चमः सर्गः ।

अथ मदच्युतिशीकरवृष्टिभिः
पृथुलपुष्करपूरितवारिभिः ।
क्षणमपूरि सरोजलमुन्नतै-
रभिनवैर्जलदैरिव कुञ्जरैः ॥ १ ॥

निजकरोन्मितैरमितैर्जलैः
परिगलद्भिरनुक्रममुक्षिताः ।
जलधरैः[4] क्षरदम्बुभिरुक्षिताः
क्षितिधरा इव रेजुरनेकपाः ॥ २ ॥

निखिलतापनमुष्णरुचेर्महः
शिशिरतामिव नेतुमभीप्सवः ।
उपरि चिक्षिपुरम्बु मुहुर्मुहु-
र्निजकरेण निपीय करेणवः ॥ ३ ॥

---

१. 'स्थ' ख. पाठः.  २. 'रविर' क. ख. पाठः.  ३. 'सृ',
४. 'रोन्नमितैरुपरि क्षणं क्षि' ग. पाठः.

अथ महीलुठितैः कलुषीकृता
स्थपुटभूषु परिस्खलनाकुला ।
उदधिकल्पमगाहत तत् सरः
सरिदिवोच्चरया तुरगावलिः ॥ ४ ॥

पृथुलकेवलपृष्ठनिषादिभिः
परिजनैः परिषेवितपांसवः ।
मृदु विरम्य विरम्य पयः पपुः
श्रमविनिःश्वसितान्यनु वाजिनः ॥ ५ ॥

अथ निदाघमहोष्मभरं वहन्
विकसदम्बुजकान्तिकरैः करैः ।
अपिबदम्बु मुहुः स महाजनो
रसमयं सवितेव धराश्रयम् ॥ ६ ॥

अथ वनं नवपुष्पगुणोज्ज्वलं
सपदि बद्धशिलीमुखमण्डलम् ।
मधुरलक्ष्यत चापमिवोद्वहन्
बहुमतं सहकारिमनोभुवः ॥ ७ ॥

मृदुलकोकिलनादमनोहरा-
श्वलितकोमलरक्तजपाधराः ।
वकुलकुड्मलकोमलकण्टकाः
स्मरयशांसि जगुर्वनदेवताः ॥ ८ ॥

विरहिदृष्टिविषादिव बिभ्यता
ममतया मधुना परिरक्षितुम् ।

---

१. 'तैरतु' ख. पाठः.

अपिहिताः सहकारनवाङ्कुराः
सपदि षट्पदनीलवरासिभिः ॥ ९ ॥

मृदुपलाशनखान् विपिनश्रियः
समभिरज्य मधुर्नवयावकैः ।
अकृत यावकशेषमिव क्षिपन्
कुसुमजालमशोकमहीरुहे ॥ १० ॥

अभिमताश्चिरभोग्यरसोकयाः
सुमनसो बकुलस्य मधुव्रताः ।
न विजहुः पतिता इति केवलं
रसविदां रस एव परं धनम् ॥ ११ ॥

मधुसमागममङ्गलदीपिका
स्मरसुवर्णशिलीमुखसन्ततिः ।
(नव ? वन)भुवः पुलकावलिराबभौ
कुसुमिता नवचम्पकमण्डली ॥ १२ ॥

मृदुलधौतधुनीधवलाम्बराः
प्रकटिताचलतुङ्गकुचाश्रियः ।
मधुसमागमसंभ्रममीक्षितुं
हिमपटावरणानि जहुर्दिशः ॥ १३ ॥

हिमपटीमपनीय पुरःस्थितां
यवनिकामिव चारु वनश्रियः ।
ननृतुरेव वसन्तमहोत्सवे
पवनलोलितपल्लवपाणिभिः ॥ १४ ॥

---

१. 'खा' ग. पाठः.

क्षणमपास्य हिमाश्रुकणावली-
नवसरोजमुखानि विकासयन् ।
अपजहार मधुर्विरहक्लमं
कमलिनीर्दयिता इव संश्रितः ॥ १५ ॥

अथ मधुश्रियमित्थमुदञ्चितां
वनमुपेत्य नराधिपयोषितः ।
अनुबभूवुरभीष्टतमैः समं
मनसिजस्य नवामिव सम्पदम् ॥ १६ ॥

विनाथिताः कुसुमेषु शिलीमुखै-
र्विटपिनद्धशिरोजगुणोज्ज्वलाः ।
तरुणपल्लवदुर्ललिताश्रयो
वनलता इव रेजुरमूः स्त्रियः ॥ १७ ॥

अभिनवप्रसवोपनतोत्सवाः
प्रियसखीरिव माननितुं लताः ।
मृदुलपल्लवपाणिषु पाणिभि-
र्जगृहिरे कृतसंभ्रममङ्गनाः ॥ १८ ॥

विनमिताः कुसुमापचये कृते
विटपिनस्तरुणीभिरथोज्झिताः ।
हृतधना इव कामिजनाश्चिरं
विरहभीरुतयेव चकम्पिरे ॥ १९ ॥

विनामिते तरुणेन तरौ रुषा
न वनिता कुसुमानि समाचिनोत् ।

१. 'नीर्युवतीरिव' क. पाठः. २. 'यै' ख. पाठः.

नखरुचः कुसुमस्य च भेदकं
गुणमसंशयमीक्षितुमक्षमा ॥ २० ॥
असकृदुच्चलितोच्चकुचाग्रया
विवृतचारुभुजद्वयमूलया ।
कुसुमजालमहारि महेलया
हृदयमेव न केवलमीशितुः ॥ २१ ॥
उदसितुं दृशि पुष्परजःकणान्
मृगदृशः स्तनभारविमर्दितः ।
नयनयोर्मुखमारुतमर्पयन्
हृदि युवा मदनाग्निमदीपयत् ॥ २२ ॥
चरणघातविधूतिषु योषितां
व्यथितयै[1]व मधुव्रतकूजितैः ।
विधुतपल्लवलोलकराग्रया
लतिकयारमराधि ससंभ्रमम् ॥ २३ ॥
भ्रमरकान्तविलुप्तविशेषकं
सखि! मुखं हृदि माणवकलवै[2] ।
इति सखी छलवादविचक्षणा
कुपितया दयितं समयूयुजत् ॥ २४ ॥
क्षणमिहा[3]स्स्व विविक्तमिदं वनं
शिथिलितं कलयामि तवांशुकम् ।
इति विलोभ्य स मुग्धवधूं युवा
किमपरं कथनीयमतः परम् ॥ २५ ॥

---

१. 'यै' ख. पाठः. २. 'वम्' क. पाठः. ३. 'वा' ग. पाठः.

उरसि वामदृशां विनिवेशिताः
 स्थगितहारमशोकतरुस्रजः ।
उपरि षट्पदधूमविनिर्गताः
 स्मरकृशानुशिखा इव रेजिरे ॥ २६ ॥

न वकुले चरसीति मृषा श्रुतं
 बकुलदाम विगुम्फितवानसि ।
इति कयापि गभीररुषा धृतं
 बकुलदाम धवेन निवेदितम् ॥ २७ ॥

सुरभि पाटलमुत्सुकमानसै-
 र्मधुलिहां मिथुनैरवलम्बितम् ।
न विधुतं रसभङ्गभियान्यया
 परसुखानुगुणा हि रसज्ञता ॥ २८ ॥

इति विहृत्य चिराय नृपाङ्गनाः
 श्रमजवारिकणोल्लसिताननाः ।
कुसुमसङ्गमवासनया मुहुः
 स्तबकिता इव रेजुरमूः स्वयम् ॥ २९ ॥

गुरुपयोधरहेमघटद्वयं
 पृथुलमौक्तिकशिक्यनिवेशनात् ।
जघनमूरुकरीन्द्रकराश्रया-
 न्नियतमूहुरमूः श्रमकर्शिताः ॥ ३० ॥

मृदुरयाः स्तनकोकधराः स्त्रिय-
 श्चलितमौक्तिकफेनविपाण्डुराः ।

---

१. 'णाभिरसज्ञया ॥' क. पाठः.

मुखरनूपुरहंसरवाकुला
ययुरपः प्रति घर्मपयोत्रहाः ॥ ३१ ॥

धवलपक्षतिचोलपरिष्कृतै-
र्नवलताङ्कुरवेत्रधरैः सह ।
परिजनैरिव हंसगणैः स्त्रियः
सरमणाः सरसस्तटमाययुः[1] ॥ ३२ ॥

तदनु कूलमवाप महीपतिः
पटगृहे सरसः सपरिग्रहः ।
तदनुकूलमधत्त विभूषणं
विहृतये सरसः स वधूगणः ॥ ३३ ॥

सरसचन्दनकुङ्कुमपङ्किलाः
प्रियकरार्चितलोलकराः स्त्रियः ।
सरसि गैरिकरागविरूषिता
वनकरिण्य इवाथ विजह्रिरे ॥ ३४ ॥

भरितयौवनवारि मृगीदृशां
मदनदन्तिवरक्षुभितं मुहुः ।
तरुणलोचनमीनकुलाकुलं
सपदि नाभिसरः सरसामिलत् ॥ ३५ ॥

विमथितं वनितास्तनमण्डलै-
र्गुरुसरोहृदयं परिचुक्षुभे ।
न खलु जीवनसारमिदं जग-
न्मृगदृशां चरितैरवशीकृतम् ॥ ३६ ॥

---

१. 'रितस्त' ग. पाठः.

H

जलविहारसमुत्सुकयैकया
न दयितानुनयेन विनोत्थितम्[1] ।
मृदुसुखादपि नीचजनाद्दतात्
प्रभुधियां गरिमैव रसावहः ॥ ३७ ॥

रमणपृष्ठमधिष्ठितयान्यया
जलमगाहि भयाकुलया किल ।
न पुनरात्मवपुर्गुरुतां जनः
प्रिय इवार्हति वेदितुमित्य(द ? तः)[2] ॥ ३८ ॥

उपसपत्नि समानमपि स्थितं
प्रियमभङ्गुरसौभगगर्वितम् ।
समधिरुह्य विधाय[3] विमानतां
सुरवधूरिव कापि सरो ययौ ॥ ३९ ॥

अवजितं वनितावदनेन्दुभिः
कमलषण्डमखण्डमपि ध्रुवम् ।
सरसि दण्डवदेव ननाम यत्
सलिलवाद्यपरिक्षुभितेऽम्भसि ॥ ४० ॥

शफरजालविलोलविलोचनैः
सकुतुकं समवेक्ष्य विलासिनीः ।
ध्रुवमसौ सरसः पयसां चय-
श्चपलवीचिभुजैः परिषस्वजे ॥ ४१ ॥

वपुषि यौवनवारिमहाह्रदे
तरुणलोचनमीनकुलाकुले ।

१. 'तानयनेन वि', २. 'दि' ख. पाठः. ३. 'हा' ग. पाठः.

बडिशसूत्रमिवाम्बु मृगीदृशां
   मृदुलधारमपात्यत कामिभिः[1] ॥ ४२ ॥
करपुटादपरेण निपातितं
   सरलधारमभङ्गुरयं पयः ।
सुचिरमास्त वधूश्रवणान्तिके
   रहसि वक्तुमिवास्य मनोरथम् ॥ ४३ ॥
प्रियकराञ्जलियन्त्रसमुत्थितं
   वलयितं यदवाप वधूमुखम् ।
क्षणमलक्ष्यत तज्जलमुज्ज्वलं
   दशनदीधितिचक्रमिवोज्ज्वलम्[2] ॥ ४४ ॥
हृदयवल्लभ! दुर्लभदर्शन-
   स्त्वमसि तत् कठिनं हृदयं तव ।
इति निगद्य कयापि समुत्थितं
   कमितुरार्द्रयितुं हृदयं ध्रुवम् ॥ ४५ ॥
कमलमर्पय तर्पयता जलै-
   रिति शठेन वधूः सहसोदिता ।
प्रचुरमम्बु मुमोच विचक्षणा
   वचसि सापि परे ननु पङ्कजम्[3] ॥ ४६ ॥
मधु पिपासति मुख्यमयं जनः
   सुतनु! ते न कराम्बुरुहोद्भवम् ।
इति दृशा रमणेन समीरिता
   रविसुदैक्षत सस्मितमङ्गना ॥ ४७ ॥

---

१. 'भिः ॥ मि', २. 'वाबलम्' ग. पाठः. ३. 'वारिजम्' घ. पाठः.

कुपितयेव कयापि मुहुः स्थितं
सपदि वञ्चयितुं प्रियमुक्षणैः ।
स तु शठः प्रणिधानपरोऽभवद्
विहसिता च सखीभिरसौ मुहुः ॥ ४८ ॥

सुतनु! मुञ्चसि[1] काञ्चनकङ्कणं
ससलिलं सुभगाय रसोत्सुका ।
इति सखीभिरगद्यत कामिनी
सपरिहासमपोढ[2]विभूषणा[3] ॥ ४९ ॥

अभिनवं मम गोत्रमिदं कृतं
दयित! ते दयितं तदिहास्तु मे ।
यदि भवेयमभीष्टतमासुने-
त्यपरयाम्बु गृहीतमुपेक्षितम् ॥ ५० ॥

नववधूवदनाम्बुरुहे मुहु-
र्विनमिते जनसंसदि लज्जया ।
तदवलोकनकामितयापरः
सलिलदण्डमुपघ्नमिवार्पयत् ॥ ५१ ॥

लुठसि[4] मे दयितास्तनमण्डले
तदिह हार! न सोढुमहं क्षमः ।
इति रुषेव युवा जलधारया
प्रियतमोरसि हारमघट्टयत् ॥ ५२ ॥

अलमलङ्करणाय दृशोः श्रियः
श्रवसि किं निहितेन मुधामुना ।

---

१. 'सु,' २. 'वो' ख. पाठः. ३. 'णम् ॥', ४. 'ति' क. पाठः.

इति वदन् दयिताश्रवणोत्पलं
वरतनोरहरज्जलधारया ॥ ५३ ॥

विलिखितं कुसुमायुधशासनं
कुचतटे नखले (प ? ख) निभाक्षरैः ।
चलदृशः सलिलोक्षितचन्दने
जनतया सकुतूहलमीक्षितम् ॥ ५४ ॥

चकितचञ्चलपाणिधृताञ्चलं
चलदृशः स्मरलोलदृशो युवा ।
निबिडनीविकमम्बरमम्बुभिः
शिथिलतामिव नेतुमघट्टयत् ॥ ५५ ॥

गुरुतमां प्रमदासु शकुन्तलां
हृदि वहन् ध्रुवमेष महीपतिः ।
पयसि न प्लवतामिति योषितः
कनकशृङ्गजलैः सिषिचुर्नृपम् ॥ ५६ ॥

अथ तटानि समारुरुहुः स्त्रियः
प्रशमितेऽम्बुनिपातमहोत्सवे ।
नवमृणालसरोजपरिग्रहाः
शरदि हंस्य इवानुसृताः प्रियैः ॥ ५७ ॥

सलिलसक्ततया लघु योषिता-
मसदिवाभवदम्बरमूरुषु ।
किमसतापि सताप्युपयुज्यते
स्वकरणीयविधावपटीयसा ॥ ५८ ॥

जलकणाङ्कितलम्बशिरोरुहं
मृगदृशामनतिप्रकटं[1] मुखम् ।
विगलदम्बुनवाम्बुदचुम्बितं
तुहिनदीधितिबिम्बमिवाबभौ ॥ ५९ ॥

रशनया जलमूकतया स्थितं
वसनयोः परिवृत्तिषु योषिताम् ।
प्रभुरहस्यविदामुचिता हि सा
परिचितेऽपि कदाचन मूकता ॥ ६० ॥

अथ सरोनिकटे पटवेश्मभि-
र्विहितराजगृहापणमन्दुरा ।
विरचिता वसतिर्नृपशासनाद्
विविधपण्य[2]कृतक्रयविक्रया ॥ ६१ ॥

तदनु तत्र समर्चितदैवतः
समुचिताहृतिवीतपरिश्रमः ।
परिवृतः परिवारजनैर्निजै-
र्दिवसशेषमुवास नरेश्वरः ॥ ६२ ॥

सुखतरमबलामुखापदेशं
शशिशतमेतदनस्तशोभमास्ते ।
इति रविरवमानवानदीप्तिः
स्फुटमपराद्रिगुहागृहं विवेश ॥ ६३ ॥

इति कृष्णविरचिते भरतचरिते पञ्चमः सर्गः ॥

---

१. 'भि', २. 'हितप' क. पाठः.

## अथ षष्ठः सर्गः

पश्चिमे तदनु पाथसां निधौ

लम्बते स्म दिवसात्यये रविः ।

श्यामले वपुषि शार्ङ्गधन्वनः

कौस्तुभो मणिरिवारुणच्छविः ॥ १ ॥

प्राप्य रक्तमालिनाम्बरां दिशं

वारुणीं कुसुमितामिवाङ्गनाम् ।

दोषमेनमपनेतुमम्बुधौ[1]

मङ्क्तुमुद्यत इवास्त भानुमान् ॥ २ ॥

लोहिताभ्रदलमण्डलोज्ज्वलं

रश्मिकेसरपरागधूसरम् ।

भासते स्म विपुलं पयोनिधौ

पुण्डरीकमिव भानुमण्डलम् ॥ ३ ॥

वीचिजालचटुले पयोनिधौ

साचिमग्नवपुराबभौ रविः ।

इन्द्रनीलमणिगुम्फमण्डने[2]

पद्मराग इव नायकीकृतः ॥ ४ ॥

खण्ड्यमानमृदुरश्मिसञ्चये

हेमकुम्भ इव भानुमण्डले ।

सन्ध्यया जलनिधौ निपातिते[3]

रश्मिखण्डधरया[4] समुत्थितम् ॥ ५ ॥

---

१. 'रागदोषम' ख. पाठः. २. 'ले' ख. पाठः. ३. 'पपाते' क. पाठः. ४. 'प' ग. पाठः.

संगृहीतवसुजालमुज्ज्वलं
भानुहेमकलशं दिनात्ययैः[1] ।
न्यस्तवानिव पयोधिमन्दिरे
लोकसाक्षिकमलक्ष्यत[2] क्षणम् ॥ ६ ॥

वारिवक्त्रविवरे विवर्तितं
वीचिलोलरसनाविलोलितम् ।
नूनमूष्मधैरमर्कमण्डलं[3]
वारिधिः सरभसं निगीर्णवान् ॥ ७ ॥

तप्तमायसमिवार्कमण्डलं
वासरेण शुचिना चिरं धृतम् ।
क्षिप्तमम्भसि पयोनिधेरभूत्
तस्य धूम इव मेदुरं तमः ॥ ८ ॥

पद्मिनी रविवियोगविह्वला
भृङ्गरावकृतगद्गदस्वरा ।
श्लिष्यदम्बुजकराङ्गुलीदलैः
प्राप्तिकालगणनामिवाकरोत् ॥ ९ ॥

इन्दिरामिव सरोजमन्दिरां
रक्षितुं रविसमागमावधि ।
सन्ध्यया पिहितमम्बुजोदरं
यामिकैर्बहिरकूजि षट्पदैः ॥ १० ॥

एकपङ्कजपलाशसंश्रितं
प्राप चक्रमिथुनं वियोगिताम् ।

१. ‘ये’ ख. पाठः. २. ‘सोपसा’, ३. ‘भ’ ग. पाठः.

हन्त मित्रविरहाकुलात्मनां
निष्फलाः पुरुषकारसंपदः ॥ ११ ॥

संवृते दिनमणौ विहङ्गमाः
शाखिनामुपरि मूकतां ययुः ।
तेजसामधिपतेस्तिरस्क्रियाः
खेदयन्ति खलु पक्षपातिनः ॥ १२ ॥

रश्मिजालमिव कीर्णमर्णवे
पङ्कपातमलिनीकृतं रवेः ।
उज्जहार तिमिरं दिनात्यय-
स्तारकानिकरमौक्तिकैः समम् ॥ १३ ॥

प्लुष्टमर्ककिरणैरिवाम्बरं
मेदुरेण तमसा मलीमसम् ।
किञ्च घर्मजलबिन्दुसन्निभै-
रुज्ज्वलैरुडुगणैरलं बभौ ॥ १४ ॥

श्यामला तिमिरपत्रपङ्क्तिभि-
स्तारकाकुसुमजालशालिनी ।
मत्तमन्मथशिलीमुखाकुला
मल्लिकेव विबभौ विभावरी ॥ १५ ॥

तादृशः समय एव योषितां
रन्तुमुत्सुकयति स्म मानसम् ।
यत् पुनर्मधु नवं च यौवनं
तद् बभूव विभवो मनोभुवः ॥ १६ ॥

सागरे सलिलकेलिलालसः
स्तोकमुद्धृतकरो नभस्तले ।
दर्शिताननं इवेन्द्रवारणः
प्राचि साचि ददृशेऽथ चन्द्रमाः ॥ १७ ॥

यामिनीरमणबिम्बमुल्बणं
चक्रमायुधमिवाङ्गजन्मनः ।
आबभौ पयसि पाथसां निधे-
रूर्मिशाणकषणादिवोज्ज्वलम् ॥ १८ ॥

लम्बयन् घनतमास्तमोजटाः
स्तारयन् दिवि शनैःशनैः करान् ।
भस्मपाण्डुरतनुर्निशाकरो
नृत्यतः श्रियमवाप शूलिनः ॥ १९ ॥

इन्दुना कुमुदिनी विकासिता
कर्कशा दृषदपि द्रवीकृता ।
तेन सा कमलिनी निमीलिता
कः समस्तहृदयङ्गमो जनः ॥ २० ॥

गोकुलं निजमुदन्वदम्भसः
क्षालितोत्थितमिवामलप्रभम् ।
श्यामलं तिमिरशष्पमण्डलं
खादयन्निव पुपोष चन्द्रमाः ॥ २१ ॥

नीललाञ्छनधरं निशाकरं
योषितः सरसमाशशङ्किरे ।

१. 'सा' क. ग. पाठः.

श्यामया सरभसोपगूढया
    प्रत्युपोढतिमिरागुरुद्रवम् ॥ २२ ॥
आततज्यमिव भृङ्गमालया
    मृज्यमानमिव शीतरोचिषा ।
कृष्यमाणमिव मातरिश्वना
    कौमुदं धनुरभून्मनोभुवः ॥ २३ ॥
केवलं जलमयो न सागर-
    स्तत्र शीतरुचिना विवर्धितः ।
अप्यसौ विटजनादृतो मुहु-
    र्योषितां मनसि रागसागरः ॥ २४ ॥
स्वां तनुं बहिरुपेत्य दर्शयन्
    धामजालकपथेन चन्द्रमाः ।
सेवते स्म करजालमर्पयन्
    योषितामिव मुखश्रिया जितः ॥ २५ ॥
कौमुदीत्रिपथगा महीतलं
    निर्मला हरिपदादुपेयुषी ।
कामिनामपि किमन्यदद्भुतं
    मानसंभृतमपाहरत् तमः ॥ २६ ॥
कामिनः कलुषितान् प्रियागृहं
    नेतुमाशु कुशला बभूव का ।
विद्रवीकृतशिला नु कौमुदी
    दूतिका नु कुशला तथाविधा ॥ २७ ॥

कान्तमानय कृशां दशामिमां[1]
पश्य दूत्यनुनयं न लङ्घये[2] ।
प्रेम तत् प्रथितमावयोर्मिथः
किं मुधा खलजनैर्विलोड्यते ॥ २८ ॥

प्रेम तादृशमभङ्गुरं तयो-
रीदृशं तदधुना विलोक्यते ।
उच्छ्रयो ह्यतिशयेन वस्तुनः
पातहेतुरिति सत्यमुच्यते ॥ २९ ॥

इत्यसावसुहृदां मिथः कथा
मा स्म भूदिति मयानुनीयसे ।
अन्यदस्तु फलमानुषङ्गिकं
जीवितेशवशगामि जीवितम् ॥ ३० ॥

ईदृशे शशिनिशासमागमे
का वियोगमनुभूय जीवति ।
रक्ष्यतां तदिदमाशु जीवितं
चित्रकर्म सति धाम्नि युज्यते ॥ ३१ ॥

इत्थमित्थमनुधाम योषितां
भाषितान्यनु समाययुः प्रियाः ।
के हि नाम कुसुमेषुशासनं
लङ्घयन्ति भुवि जीवितेच्छवः ॥ ३२ ॥

कामकर्मपरिकर्म योषितां
नात्यवर्तत निजां वपुःश्रियम् ।

---

१. 'शामिमां दशां प', २. 'ये:' ख. पाठः.

पद्मरागरुचिरुज्ज्वलोज्ज्वला
नैव कुङ्कुमरसेन र[1]ज्यते ॥ ३३ ॥

हारचन्दनधरौ पयो[2]धरौ
योषितामुरसि पुष्पधन्वनः ।
रेजतुः स्फुटमुदस्तमस्तकौ
*वारणाविव रणाय स[3]ज्जितौ ॥ ३४ ॥

जातिदाम कबरीषु लघ्वपि
प्राप्तमेव निदधुस्तदङ्गनाः ।
जातितोऽथ गुणगौरवेण वा
यस्य न त्यजति वासनां जनः ॥ ३५ ॥

हृद्यगन्[4]धकुसुमाधिवासितं
भेजिरे तुहिनषण्डपाण्डरम् ।
तुङ्गमद्रिपतिशृङ्गसन्निभं
तल्पमुत्पलदृशः सकामुकाः ॥ ३६ ॥

कामिभिः सह मनोनुगामिभिः
शीधुपानमबलाः प्रचक्रिरे ।
प्रस्तुते सुरतघोरसङ्गरे
वीरपाणमिव मन्मथानुगाः ॥ ३७ ॥

---

१. 'यु' ग. पाठः. २. 'योनिधौ यो' क. पाठः. ३. 'संयतौ' ग. पाठः. ४. 'न्धि' क. पाठः.

---

* इह वारणशब्दस्य तत्सम्बन्धिनि लक्षणा कल्पनीया । मन्मथयुद्धसज्जीकृतगजसंबन्धिनौ उत्क्षिप्तौ मस्तकाविवेत्यर्थः समर्थनीयः ।

इन्दुरिन्द्रदिशि लोचनोत्पलैः
सेवितो रसनयाथवासवः ।
अस्तु वो मदविशेष इत्यमुं
कः प्रसादमकरोन्मृगीदृशाम् ॥ ३८ ॥

पीतमाशु मधु रागमुत्कटं
किं गुणान्तरमसूत योषिताम् ।
घूर्णितं तदिह भार्जने चिरं
घूर्णयदेपि दृशौ निजैर्गुणैः ॥ ३९ ॥

कामिनोऽथ परिरेभिरे वधू-
र्वक्षसि प्रथितपीवरस्तनम् ।
पीडितैरिव विमर्दनिर्भरै-
र्भूषणैररमरावि तत्क्षणम् ॥ ४० ॥

या पुरा हृदि बभूव कामिनो-
र्मानशल्यशकलावलिः स्थिरा ।
सा समागमरसायनोक्षिता
निर्ययौ पुलकसंहतिच्छलात् ॥ ४१ ॥

योषितां प्रियतमोपगूहने
तुङ्गमप्यवनतं कुचद्वयम् ।
उन्नतस्य महतो गरीयसः
सन्नतिः प्रियजनेषु युज्यते ॥ ४२ ॥

१. 'चू', २. 'जिर चि' ख. पाठः. ३. 'नैश्चिरं' क. पाठ
४. 'चू', ५. 'सुकृतसन्तति', ६. 'तमेषु' ख. पाठः.

[1] विश्लथन्निबिडनीवि योषिता-
मम्बरं मृदु रहस्यरक्ष्यपि ।
तां जगाद दयिताङ्गसङ्गमे
मुद्रया हृदि परां रिरंसुताम् ॥ ४३ ॥

प्रेषितः प्रणयिनोपमेखलं
पाणिराकुलमरोधि बालया ।
वारितोऽपि मुहुरुत्सुकश्चिरं
नाभिमानगणनां चकार सः ॥ ४४ ॥

विस्तृतं जघनमेदिनीतलं
कामिनी हृतदुकूलमाकुला ।
अक्षमा स्वयममुष्य गोपने
प्रेयसे मदनसाक्षिकं ददौ ॥ ४५ ॥

मुक्तमौक्तिकमनोज्ञमेखला
निर्गलै[2]न्निबिडनीविबन्धना ।
गाढमाशु परिरभ्य सत्रपा
पर्यधत्त रमणाङ्गमङ्गना ॥ ४६ ॥

गाढदष्टरदनच्छदं मुहुः
सीत्कृतार्धमुकलीकृतेक्षणम् ।
वक्त्रमासवसुगन्धि योषितां
चुम्ब्यमानमपि चुम्बितं प्रियैः ॥ ४७ ॥

कृत्स्नमेव [3]रदनच्छदामृतं
पातुमुत्सुकधियापि योषितः ।

---

१. 'प्र' ग. पाठः. २. 'म', ३. 'दशन' क. पाठः.

बिन्दुमात्रमधरेऽवशेषितं
कामिना दशनपातमुद्रया ॥ ४८ ॥

पूगनागलतिकादलं प्रियः
प्रेयसीललितदन्तखण्डितम् ।
आचकर्ष [1]घनसारसौरभं
रागसारमिव कामिनीमुखात् ॥ ४९ ॥

पञ्चभिर्नखमुखैर्वि[2]लेखितं
प्रेयसा स्तनयुगं मृगीदृशः ।
व्यज्यमानदलभेदमाबभौ
जृम्भमाणमिव पङ्कजद्वयम् ॥ ५० ॥

सीत्कृतानि सरसानि योषितैः[3]
श्रोतुमुत्सुकतमेन कामिना ।
वर्तुलं गलघुटं प्रवर्तितं
[4]दंशनेन मणिदाममण्डनम् ॥ ५१ ॥

गद्गदेन शकलीकृताक्षरं
भाषितं तदनु योषितामभूत् ।
सूक्ष्मलक्ष्मभिदुरैरभङ्गुरैः
खण्ड्यमानमिव कामसायकैः ॥ ५२ ॥

ऊरुतोरणयुगे मृगीदृशः
श्रोणिचक्रमधिकर्तुमिच्छता ।
कामिना नखमुखैर्निवेशिता
मन्मथस्य महिताः प्रशस्तयः ॥ ५३ ॥

---

१. 'दशनच्छदच्छलादाचितं घनरसेन भूयसा' क. पाठः. २. 'रलङ्कृतं', ३. 'तां, ४. 'दर्शने' ग. पाठः.

सोपचारमुपगूह्य निर्दयं
  वक्षसा स्तनतटे शयालुना ।
लज्जितापि कुशलेन कामिना
  मज्जिता नववधूः स्मरार्णवे ॥ ५४ ॥

योषितश्चपलमक्षि चुम्बत
  श्चापलं हृदि बभूव कस्यचित् ।
नूनमन्यगुणसंक्रमो नृणां
  जायते परिचयेन भूयसा ॥ ५५ ॥

कान्त! सीदसि यदि प्रसीद मे
  भारमेनमहमुद्वहामि ते ।
इत्यकाण्डरतिभङ्गभीतया
  कस्यचिद् दयितया नरायितम् ॥ ५६ ॥

कान्तकण्ठकुहरे विवर्तितं[1]
  मञ्जुलं मणितमाप्तुमिच्छती ।
अन्तरुत्सुकतमा[2] प्रियानने
  नूतना सुतनुराननं ददौ ॥ ५७ ॥

नोपगूढमचिरोढया वपुः
  श्लिष्यतोऽपि दयितस्य लज्जया ।
विक्रिया हृदि तया न संवृता
  सा च तस्य रतये पदं ददौ ॥ ५८ ॥

अन्यया रतिविधौ नरायिते
  पीवरोरुजघनस्तनं वपुः ।

---

१. 'प्र', २. 'या' ख. ग. पाठः.

शैलवद् गुरुतरीकृतं क्वचित्
तूलवल्लघुतरीकृतं क्वचित् ॥ ५९ ॥

कुण्डलोल्लिखितगण्डरेखया
हारहीरलुठितस्तनाग्रया ।
उत्सुकोऽपि दयितोऽनुरक्तया
नान्वगृह्यत रते महेलया ॥ ६० ॥

अन्ययोरभिनवानुरागयो-
र्मुग्धयोरनतिरू[1]ढदाक्ष्ययोः ।
मन्मथेन गुरुणोपदर्शिता
नैपुणी रतिविधौ तयोरभूत् ॥ ६१ ॥

स्रस्तकुन्तलविकीर्णमालया
घृष्टचन्दनपयोधरान्तया ।
श्रान्तया श्रमजवारिसिक्तया
कान्तवक्षसि सुषुप्तमेकया ॥ ६२ ॥

वक्षसि श्वसितकम्पितौ[2] स्तनौ
रेजतुर्निधुवने मृगीदृशः ।
मारुतक्षुभितवीचिचञ्चलौ
चक्रवाकविहगाविवाम्भसि ॥ ६३ ॥

योषितां प्रियतमोपगूहने
मौक्तिकैर्हृदि निवेशितैरिव ।
स्वेदवारिपृषतैर्विनिस्सृतं
गण्डयोर्गलितपत्रलेखयोः ॥ ६४ ॥

---

१. 'गू' ग. पाठः. २. 'तु' क. पाठः.

हेलया त्रुटितहारशृङ्खला
सोढगाढनखराङ्कुशक्षतिः ।
योषितः स्तनकरेणुरुन्नता
वल्लभेन दमिता कथञ्चन ॥ ६५ ॥

ह्रीभरादवनतानना पुरा
या कथञ्चन रतौ प्रयोजिता ।
सा द्वितीयसुरते समुत्सुका
कापि कामपि जगाम विक्रियाम् ॥ ६६ ॥

कामिनामिति समागमोत्सवं
वीक्ष्य कामविवशेव यामिनी ।
अम्बरान्तमवलम्ब्य यास्यता
वल्लभेन सहिता विनिर्ययौ ॥ ६७ ॥

दिशि दिशि करजालमेष भानु-
स्त्वमिव करोति महीभृतां गणेषु ।
इति सुखमवबोधितोऽथ सूतै-
र्नृपतिरनन्तरकृत्यमन्वतिष्ठत् ॥ ६८ ॥

इति कृष्णविरचिते भरतचरिते षष्ठः सर्गः ॥

---

## अथ सप्तमः सर्गः ।

अथैनमास्थानगतं नरेन्द्र-
मभ्येत्य कश्चिन्महितो महर्षिः ।
रत्नाकरं सत्त्ववतां पुरोगं
संवर्धयामास शशीव गोभिः ॥ १ ॥

---

१. 'न्वचलान्त' क. ख. पाठः.

स राजसिंहः सहसावरुह्य
सिंहासानाद्रेरवनीं विनीतः ।
पुरोधसा साकमुपाहृतार्घ्य-
स्तपोधनं तं विधिनोपतस्थे ॥ २ ॥

अथाश्रमस्थानजितारिवर्गौ
भूतिं दधानौ गुरुशासनस्थौ ।
सं[1]ताङ्गयुक्तौ मणिविष्टरस्थौ
विरेजतुस्तौ मुनिराजवर्यौ ॥ ३ ॥

मुनेः श्रवः प्राप्तुमिवाथ शुद्धां
मन्दस्मिताम्भोभिः[2]स्नपितामिवार्द्राम् ।
नभोगुणत्वादिव मुक्तसङ्गां
प्रवर्तयामास गिरं नरेन्द्रः ॥ ४ ॥

तत्कालदुःखानि महाफलानि
प्रायेण कर्माणि भवन्ति लोके ।
सद्यः प्रमोदं प्रथमं प्रसूते
फलानुकूलं च विलोकनं वः ॥ ५ ॥

विकासयन्तं हृदयारविन्दं
प्रसादवत्त्वात् प्रथयन्तमाशाः ।
अन्तर्गतं ध्वान्तमपाहरन्तं
मन्ये भवन्तं भुवि भानुमन्तम् ॥ ६ ॥

व्यापारयन्तं परया स्वशक्त्या
संयोज्य कृत्येषु कयापि बुद्ध्या ।

---

१. 'त' क. पाठः. २. 'द्भिः' ग. पाठः.

विज्ञातुमिच्छन् न कथं विजाने
स्वान्तस्थितं जन्तुरिवेश्वरं त्वाम् ॥ ७ ॥
एतत् समाकर्णयतो महर्षे-
र्मुखेन्दुबिम्बादमला सुधेव ।
प्रियावियोगग्लपितं नरेन्द्र-
माह्लादयन्ती प्रससार वाणी ॥ ८ ॥
अवेहि कण्वस्य मुनेर्नियोगाद-
भ्यागतं मां कपिशाभिधानम् ।
अस्त्यत्र किञ्चिद् गुरुणानुशिष्ट-
माप्तैः सह श्रोष्यति मन्त्रिभिस्त्वम् ॥ ९ ॥
आस्ते कुमारी कुलशीलयुक्ता
शकुन्तलेत्याहितनामधेया ।
सा मेनकाकौशिकयोरपत्य-
मस्माकमङ्के परिवर्धिता च ॥ १० ॥
अर्कांशुजालेन सरोजिनीव
शशाङ्कबिम्बेन विभावरीव ।
प्रवालजालेन लतेव युक्ता
विभाति सा सम्प्रति यौवनेन ॥ ११ ॥
आधिश्च तेनान्वहमेधमानः
शान्त्यम्भसास्याः प्रशमं न याति ।
शरीरजन्मोपहितोऽथवासौ[1]
क्व मन्त्रपूतेन जलेन हार्यः ॥ १२ ॥

---

१. 'सः' ख. पाठः.

अस्य त्वमेवासि निमित्तमस्याः
　　साक्षात् प्रतीतः परथा दृशा नः ।
अर्कादृते को हृदयं नलिन्याः
　　स्नेहात् समुत्कण्ठयितुं समर्थः ॥ १३ ॥

एतच्च किञ्चित् प्रणिधेयमन्यत्
　　तां दानवः कश्चन याचते नः ।
श्लाघ्येऽनुरक्तामपि राजहंसे
　　ध्वाङ्क्षः कथं काङ्क्षति राजहंसीम् ॥ १४ ॥

शुभे मुहूर्ते भविता विवाह-
　　स्तवेति साकूतमुदीरितश्च ।
प्राप्तेषु कृच्छ्रेषु महत्सु पुंसां
　　न[१] सत्यभङ्गाय भवन्ति वाचः ॥ १५ ॥

तदाश्रमं प्राप्य शकुन्तलां त्वं
　　गृहाण पाणीकरणेन साध्वीम् ।
को नाम दैत्यः प्रतिवीक्षितुं त्वां
　　दीप्तं[२] दिवाभीत इवांशुमन्तम् ॥ १६ ॥

इत्थं नियुक्तोऽसि महर्षिणा त्वं
　　प्रमाणवाचा विधिनेव साक्षात् ।
स्वतः प्रमाणं द्वयमेव मन्ये
　　वेदश्च विद्वान् स तपोनिधिश्च ॥ १७ ॥

गिरं गुरोस्तेन समाहृतां तां
　　त[३]थेति मूर्ध्ना जगृहे जनेशः ।

---

१. 'नात्यन्तभ' क. पाठः. २. स्वयं' दि ख. पाठः. ३. 'था च मू' क. पाठः.

विशुद्धवर्णां विमलां गुणाढ्यां
मालां मनोज्ञामिव कन्यकायाः ॥ १८ ॥
प्रस्थानमद्यैव कुरुष्व वीर !
प्रष्ठो भवामि प्रहतो हि पन्थाः ।
इति प्रतस्थे प्रथमं तपस्वी
ततोऽपि चेतः प्रथमं नृपस्य ॥ १९ ॥
अथ प्रतापं प्रथयन् पृथिव्यां
प्रसारयन् दिक्षु यशोमयूखान् ।
घनान्तरालादिव घर्मरोचिः
सेनानिवेशान्निरगान्नरेन्द्रः ॥ २० ॥
तत्रैव सैन्यं सकलं निवेश्य
सारं समाहृत्य ययौ यथार्हम् ।
सत्त्वाधिकानां हि सुनीतिभाजां
पुंसामतन्त्रं परिवारसम्पत् ॥ २१ ॥
आनन्दयन् नाकजुषः स राजा
वित्रासयन् विद्विषतां मनांसि ।
उत्कण्ठयन् वर्त्मनि नीलकण्ठान्
ययौ घनध्वानभृता रथेन ॥ २२ ॥
अस्यानुकूलेन समीरणेन
रथाङ्गनिष्पेषभवः परागः ।
दूरान्निरस्तः पथि दक्षिणेन
नीचो ह्यचक्षुष्यतमः प्रभूणाम् ॥ २३ ॥

१. 'र' ग. पाठः.

[1]तथातिदुर्गं बहुवाहिनीकं
सुवर्णपूर्णं कटकं दधानम् ।
उत्तुङ्गवंशं हिमवन्तमारा-
न्महीभृतां नाथमसौ ददर्श ॥ २४ ॥

प्राच्यां प्रतीच्यां च निवेश्य पादौ
संदश्य गाढं शफरीमिवोर्वीम् ।
यः पक्षहीनोऽपि खमुत्पतिष्णु-
र[2]ध्रैरुदग्रैः शिखरैर्विभाति ॥ २५ ॥

दिवापि नीलाश्मघनक्षपाणि
तिग्मांशुमार्गादुपरिस्थितानि ।
यस्योत्तमाङ्गानि सुराङ्गनाभि-
रङ्गीक्रियन्ते सुरतोत्सुकाभिः ॥ २६ ॥

आवर्तचक्राणि सरित्सु यस्य
संक्रान्तमाणिक्यमणिच्छवीनि ।
अलातचक्रप्रतिमानि शत्रोः
प्रत्यक्षशङ्कां जनयन्ति जिष्णोः ॥ २७ ॥

अन्यत्र य[3]स्माद् द्वितयं न दृष्ट-
मद्रौ न तादृग् गिरिराजशब्दः ।
जगज्जनन्यास्तनयात्वमेकं
जामातृभावश्च शशाङ्कमौलेः ॥ २८ ॥

गुञ्जाफलादानसमुत्सुकाभि-
रापातसाम्यादनुसं[4]चितानि ।

---

१. 'अथाद्दिदु' क. पाठः. २. 'द्रै' ग. पाठः. ३. 'त' ख. पाठः.
४. 'चिन्तिता' क. पाठः.

यत्रानुशृङ्गं शबराङ्गनाभि-
मणिक्यरत्नानि निराक्रियन्ते ॥ २९ ॥

आकृष्टचापानवलोक्य यस्य
तुङ्गेषु शृङ्गेषु किरातसङ्घान् ।
शुकाङ्गनाः स्वर्गविलासिनीनां
गीर्वाणभाषाभिरुपालभन्ते ॥ ३० ॥

दीप्तांशुकान्ताश्मकृशानुदीप्तं
विपच्यमानोपलकुम्भजालम् ।
यस्याशुनिर्यद्घनधूमकाण्डं
कुलालवेश्मेव विभाति शृङ्गम् ॥ ३१ ॥

मुहुः पतन्तौ मुहुरापतन्तौ
पर्यायवृत्त्या शशिभानुमन्तौ ।
संक्रीडनार्थाविव कन्दुकौ द्वौ
यस्योपकण्ठं नभसो भजेते ॥ ३२ ॥

यस्यायमेको महिमा[1] महीया-
नास्तां विशालत्वमथोच्छ्रयो वा ।
यदिन्दुमौलिः स्वयमम्बिका च
वत्साविवाङ्कं सततं भजेते ॥ ३३ ॥

उन्नम्रपादाग्रमुदग्रशृङ्गं
यमन्यमुक्षाणमिवोत्पतिष्णुम्[2] ।
शृङ्गान्तराले निजशृङ्गकोट्या
स्थाणोर्महोक्षः प्रसभं पिनष्टि ॥ ३४ ॥

१. 'गरिमा गरीया', २. 'पतीक्ष्णम्' ख. पाठः.

सरित्पतिर्यस्य सरित्प्रसूते-
रुत्पत्स्यमानाः सरितोऽधिगन्तुम् ।
रत्नानि शुल्कार्थमिवोपनीय
पादं समाश्लिष्यति नीचवृत्त्या ॥ ३५ ॥

पश्चादिलायां प्रलयं गतायां
सर्गविधानं दधता विधात्रा ।
यो भाति कर्तुं वसुधामिवान्या
संपादितः कोऽपि मृदां समूहः ॥ ३६ ॥

दुर्वर्णचूर्णच्छविमुद्वहन्तं
सुवर्णभूरेणुविरूषिताङ्गाः ।
यस्मिन्नरण्यद्विरदा महार्हाः
सुरद्विपं जेतुमिवोत्सहन्ते ॥ ३७ ॥

अपांवरं यस्य नितम्बचक्र-
मपाम्बरं नैव करोति गङ्गा ।
अनुक्षणं यामधिगम्य दिव्या-
मनुक्षणं न क्रियते महद्भिः ॥ ३८ ॥

यस्मिन् मुहुर्धातुभिरात्मकान्त-
मालिख्य विश्लेषविनोदनीभिः ।
चित्रार्थता धातुषु निर्विवादं
विद्याधरीभिः क्रियते यथार्था ॥ ३९ ॥

पयोधिमुत्खातवता विधात्रा
निखातशेषे वसुधातलेऽस्मिन् ।

---

१. 'सगर्भा' ग. पाठः.

खातः कियान् जात इतीव
मातुर्यो भाति तुङ्गः प्रतिमानकूटः ॥ ४० ॥

कुशेशयानां भवनेषु यत्र
कुशेशयानां निकटे मुनीनाम् ।
सरःस्वतीव प्रथते स्रवन्ती
सरस्वतीवाशु कवीश्वरेषु ॥ ४१ ॥

उद्धृत्य मूर्ध्ना सरिता सहस्र-
मादाय रत्नानि महाधनानि ।
उत्थाय शीतालुरिवाम्बुराशे-
र्यस्तापनं धाम दधाति पार्श्वे ॥ ४२ ॥

यत्र ध्वनिः श्रूयत एव नित्यं
वषट्पदानां नवषट्पदानाम् ।
सवे मुनीनां प्रसवे तरूणां
न वा रणानां धनवारणानाम् ॥ ४३ ॥

यः स्थातुमीष्टे परितो विरूढान्
सालानवष्टभ्य कथञ्चिदेव ।
अभ्रङ्कषाणां शिरसि स्थितानां
ग्राव्णां गरिम्णेव सुदुर्वहेण ॥ ४४ ॥

समीरणाः सानुषु यस्य नित्यं
कुविन्दकृत्यानि विडम्बयन्ति ।
यतः पयोदावरणे विशीर्णे
पटं हिमान्या निबिडं वयन्ति ॥ ४५ ॥

---

१. 'व' ख. ग. पाठः.

धातुद्रवक्षोभितरक्तधारा-
स्तिर्यग्दधानस्तटनिर्झराणाम् ।
नित्यं हिमानीघनकच्छुराङ्गः
सिरासु[1] यो विद्ध इवावभाति ॥ ४६ ॥

अम्बुच्छटामंशुकसन्निकाशां
महानदीनां बहुधा तु भिन्नाम् ।
बिभर्ति यः काञ्चनरत्नकान्ति
महानदीनां बहुधातुभिन्नाम् ॥ ४७ ॥

गौरीशरीरै[2]च्छुरितार्धभागा-
मर्धेन्दुपीयूषनिषिक्तनेत्रम् ।
पश्यन्ति यस्मिन् परमेश्वराख्यं
तज्जङ्गमं ब्रह्म समाधिभाजः ॥ ४८ ॥

नालीकरागेण समुज्ज्वलेन
कृशानुभावं वहते य एकः ।
नालीकरागेण वदामि किञ्चित्
कृशानुभावं कुरुते च मेरुम् ॥ ४९ ॥

तमित्थमाराध्यगुणं गिरीन्द्र-
मुद्वीक्षमाणः सुचिरं पुरस्तात् ।
स जग्मुषां क्षोणिभृतामधीश-
स्तं तस्थुषा नाथमथानुमेने ॥ ५० ॥

अथास्य भूभर्तुरुपत्यकाया-
मुपेत्य वाहाः स्थपुटोपलायाम् ।

१. 'सीरायुधो वि', २. 'रेण घृतार्ध' ख. पाठः.

उद्भ्रान्तचक्रं रथमुद्वहन्तः
साशङ्कपातानि शफानि चक्रुः ॥ ५१ ॥

उच्चाधिरोहेषु विमुच्य रश्मीन्
निम्नावरोहेषु निगृह्य किञ्चित् ।
रथ्यान् कथञ्चिद् विनियम्य यन्ता
राजानमश्रान्ततनुं निनाय ॥ ५२ ॥

अथाश्रमोपान्तमुपेत्य राजा
गव्यूतिमात्रे सति मार्गशेषे ।
रथादवारुह्य ययौ पदाभ्यां
संभावयिष्यन्निव भूतधात्रीम् ॥ ५३ ॥

मा दुन्दुभिर्मा च सितातपत्रं
मा चामरे चेति कटाक्षदृष्ट्या ।
निवारयामास स राजचिह्नं
विनीतसेव्यं हि वनं मुनीनाम् ॥ ५४ ॥

नीवारशालिग्रहणोत्सुकेन
विकीर्यमाणं वयसां गणेन ।
आच्छिन्नमुक्तं कुशमत्तुकामैः
कुरङ्गशावैश्चटुलैरुपेतम् ॥ ५५ ॥

आम्नायघोषप्रतिघोषपूर्णैः
शिलागृहैर्बृंहितधीरनादम् ।
निर्दह्यमानाहुतिगन्धमिश्रै-
र्धूमैः परिस्तीर्णवितानबन्धम् ॥ ५६ ॥

आमृष्टशालाङ्कणकुट्टिमेषु
नीवारपिष्टद्रवमुद्रितेषु ।
मनस्विनां योगजुषां मुनीना-
मर्धासनारूढकुरङ्गशावम् ॥ ५७ ॥

आक्रीडमाम्नायसरस्वतीना-
मासारवातं रजसां घनानाम् ।
आलोकमन्तस्तिमिरोत्कराणा-
मथाश्रमं प्राप विशामधीशः ॥ ५८ ॥

अथार्चयामासुरुदग्रदीप्तिं
तपोधनाः सत्पथवर्तिनं तम् ।
तन्वानमाशासु करप्रचारं
सप्तर्षयः सूर्यमिवोपयान्तम् ॥ ५९ ॥

आसीनमेते कुशलानि पृष्ट्वा
पुनस्तमूचुर्मुनयो नरेन्द्रम् ।
वल्लीव वृक्षं परिरब्धुकामा
शकुन्तला सीदति वर्धमाना ॥ ६० ॥

तदद्य गान्धर्वविधेः कुमारीं
मिथोऽनुमत्या कुरु वीर! पत्नीम् ।
रूपेण शीलेन कुलेन तुल्या
सेयं सपत्नी क्रियतां धरित्र्याः ॥ ६१ ॥

यत् प्रार्थ्यते सा दनुजेन कन्या
कस्तं निषेद्धुं क्षमते त्वदन्यः ।

---

१. 'ते' क. पाठः.

अतः सुनीत्या स ययौ गुरुर्नः
स्वयं न दातुं न निषेद्धुमीष्टे ॥ ६२ ॥
आवेद्य श्रुतिसुखमस्य कण्ववाक्यं
निर्याता निजनियमाय तापसास्ते ।
राजासौ गुरुगिरि गौरवादिवाज्ञां
बिभ्राणः सपदि विनम्रकन्धरोऽभूत् ॥ ६३ ॥

इति कृष्णविरचिते भरतचरिते सप्तमः सर्गः ॥

---

## अथाष्टमः सर्गः ।

अथ नरपतिरन्तरुल्लसन्तीं
नवरसभावमनोहरां कुमारीम् ।
अनुपदमवमृष्टसद्गुणाढ्यां
कृतिमिव पत्रनिवेशितामपश्यत् ॥ १ ॥
निभृतमुटजकोटरे मुनीनां
स्मरशरपातभयादिव प्रपन्नाम् ।
किसलयशयने सखीसनाथा
श्रियमिव वारिजविष्टरे निषण्णाम् ॥ २ ॥
व्रणमिव कुसुमेषुमार्गणानां
हृदि सरसीरुहमार्द्रमुद्वहन्तीम् ।
असकृदनुनिषेव्यमाणमाध्वी-
वचनसुधाभिरुदूढजीविताशाम् ॥ ३ ॥
जगति गुरुतरार्घरत्नसारां
परिचितपुण्यजनां श्रियं वहन्तीम् ।

अनवरतमुपोढराजहंसं[1]
धनदपुरीमिव मानसं दधानाम् ॥ ४ ॥

समजनि ममता नु तस्य कान्ति-
न्मनसि कृपा नु कृतार्थता नु जाता ।
मनसिजचरितेषु विस्मयो वा
विरहकृशानुकृशां निशाम्य बालाम् ॥ ५ ॥

नयनयुगलमस्य पश्यतस्ता-
ममृतनिषिक्तमिवार्द्रतामवाप ।
अपिच विरहशोकशङ्कुजालं
बहिरगलत् पुलकाङ्कुरच्छलेन ॥ ६ ॥

अवनतवदना शकुन्तलापि
क्षितिपमवेक्ष्य विवर्तितैः कटाक्षैः ।
न चलितुमशकन्न चापि वक्तुं
परिलिखितेव बभूव साध्वसेन ॥ ७ ॥

तदपि कृतसखीकरावलम्बा
करतलसंवृतपाण्डुगण्डरेखा ।
किसलयशयनात् कथं कथञ्चिद्
विरहमहादहनादिवोदतिष्ठत् ॥ ८ ॥

अथ करिकरकान्तिचौर्यनिघ्नं
नरपतिदण्डभयादिवायताक्ष्याः ।
अपि गुरुतरसारमूरुयुग्मं
चलदलपल्लवचापलं चकम्पे ॥ ९ ॥

---

१. 'सां' ख. पाठः.

श्रमजलपृषतावलिः स्तनाग्रे
तरलदृशस्तरलं विनाभिरामा।
निशितपुलकसूचिरुद्धरन्ध्रा
स्मरघटितेव रराज हारयष्टिः॥ १०॥

स्नपितमिव हिमैः प्रमोदबाष्पै-
रविरलपक्ष्मपुटे चिरं निरुद्धैः।
नयनकुवलयद्वयं नितान्तं
विरहमहोष्माणि ततमायताक्ष्याः॥ ११॥

अतिथिरयमतर्कितप्रभावः
सखि! विभवोत्तरमर्हणीय एषः।
तदिह वितर विष्टरं विशिष्टं
न हि बहुमानमृतेऽर्हणा महत्सु॥ १२॥

निभृतमिति सखी तया नियुक्ता
मनसि निषण्णमपि स्थिरं कुमार्याः।
प्रतिकृतिमिव वीक्षितुं पुरस्ता-
न्नरपतिमाशु निवेशयाञ्चकार॥ १३॥

तदनु परिजने विनिर्गते ता-
मकथयदात्मदशां विशामधीशः।
न खलु दयितयोर्मिथोऽनुरागो
रसविमुखेषु मुधा निवेदनीयः॥ १४॥

वरतनु! तव कातराः कटाक्षाः
क्वचन कुतोऽपि यदृच्छया प्रवृत्ताः।

मम हृदि पतितास्तुदन्ति गाढं
मनसिशयस्य शिलीमुखा इवान्ये ॥ १५ ॥
स्मरशरचकितं मनो मदीयं
त्वयि शरणार्थमिवावगाढमेतत् ।
पुनरपि परिदूयते नितान्तं
क्वनु खलु शाम्यति सर्पिषा कृशानुः ॥ १६ ॥
सुतनु! तव मुखारविन्दमेतत्
कुचभरचक्रयुगं च मानसेऽस्मिन् ।
विकसति मम केन तन्निषेव्यं
न पुनरपुण्यजनेन चेतसापि ॥ १७ ॥
गुरुरपि मुनिरावयोर्हितार्थी
कमपि नियोज्य वनान्तरं जगाम ।
तदिह मम मुनीन्द्रवह्निशुद्धा
कनकमयीव भवाद्य कण्ठभूषा ॥ १८ ॥
इति नरपतिना समीरिता सा
न परमपत्रपया न किञ्चिदूचे ।
अखिलमवनतानना तथापि
स्तनतटपातिभिरश्रुभिः शशंस ॥ १९ ॥
तदनु स विदि[1]तेङ्गि[2]तः कुमार्याः
स्फुटतरमात्मनि भावमाकलय्य ।
सहृदय इव सत्कृ[3]तेरनुक्तं
कमपि विशेषमसौ मुदं जगाम ॥ २० ॥

---

१, २. 'हि', ३. 'तै' ग. पाठः.

इति कथितवती सखीमुखात् सा
मदनशरैरिव खण्डितैर्वचोभिः ।
यदि गुरुरनुमन्यते न दोष-
स्तदिदमुषर्बुधसाक्षिकं विधेयम् ॥ २१ ॥

अथ नियमपुरःसरं पुरोधाः
क्षितिपतिना नियमार्थिना नियुक्तः ।
कृतभुवि विधिना निधाय वह्निं
परिकरितक्रममाहुतीर्जुहाव ॥ २२ ॥

तदनु परिणता नरेन्द्रनार्यः
कनकनवाम्बरहारगन्धमाल्यैः ।
अभिनवघनयौवनां कुमारीं
किसलयितामिव चक्रुरङ्गकेषु ॥ २३ ॥

नखरुचिनवकेसराभिरामं
परिगतकण्टकलोल[1]बाहुनालम् ।
कमलमिव करेण पाणिमस्याः
श्रमजलशीतलमग्रहीन्नरेन्द्रः ॥ २४ ॥

हुतभुजि विरराज लाजवृष्टि-
स्तरलवधूकरपल्लवो[2]पकीर्णा ।
सपदि दिनमुखश्रिया विमुक्ता
दिनकरतेजसि तारकावलीव ॥ २५ ॥

अथ विजयसमृद्धिशंसिनीभि-
र्नरपतिमृग्भिरवर्धयन् द्विजेन्द्राः[3] ।

---

१. 'बाहुलोलना', २. 'वावकी, ३. 'मुनीन्द्राः' ग. पाठः.

निजविभवविवृद्धमम्बुराशिं
सलिलधरा इव वृष्टिभिर्नवाभिः ॥ २६ ॥

तदनु दयितया तया सहासौ
पटभवनेषु विशुद्धसंस्तरेषु ।
हर इव विजहार हैमवत्या
रजतमहीधरगह्वरोदरेषु ॥ २७ ॥

रविरिव नलिनीं निसर्गमुग्धां
मृदुलतरेण करेण मानवेन्द्रः ।
मुकुलितकमलेक्षणां नवोढा-
मनुसरणक्रमकौशलेन भेजे ॥ २८ ॥

अलिकमलयजानुलेपधूलिः
पतति तवाक्षणि किं न वारयिष्ये ।
इति स मुखसरोजमुन्नमय्य
क्षणविकचेक्षणमाचुचुम्ब तस्याः ॥ २९ ॥

मदनशरविभिन्नमेतदङ्गं
सुमुखि! कुचोष्मणि तापयामि किं ते ।
इति घनममुना विमर्दिताङ्गी
पुलकचयेन तथेति सा शशंस ॥ ३० ॥

अयमलसदृशः पपौ मनोज्ञा-
मधरसुधामिव यौवनाम्बुधाराम् ।
ह्रियमिव शिथिलीचकार नीवीं
हृदयमिवांशुकमाचकर्ष तस्याः ॥ ३१ ॥

विरहविधुरयोर्यथा यथाभू-
न्मनसि पुरा स मनोरथप्रवाहः ।
अखिलमनुबभूवतुस्तथा तौ
कृतसुकृताविव कामिनौ स्वकामान् ॥ ३२ ॥

इति नृपतिरुवास मासमेकं
हरिणदृशा ह्यनुरक्तयानुरक्तः ।
द्विप इव रसलोलया करिण्या
स्मरविशिखाङ्कुशवश्यतामुपेतः ॥ ३३ ॥

तदनु नरपतिर्जगाद जायां
मम हि वधूरधुना त्वमेव[2] भासि ।
तदिह निजपुरं नयाम्यहं त्वां
न खलु विना गृहिणीं गृहाः सुखाय ॥ ३४ ॥

इति नरपतिना समीरिता सा
विषमितकार्ययुगाकुला जगाद ।
नहि मुनिरिह दृश्यते पिता मे
तदनुमतिं कथमाप्नुयां न जाने ॥ ३५ ॥

मम गुरुसदनान्निवर्तनं[3] किं
तदनुमतेन विना नु युक्तमेतत् ।
भवदनुगमनं ममार्हमिष्टं
क्षममुचितं च ततो नियोक्ष्यसि त्वम् ॥ ३६ ॥

स पुनरकथयत् प्रसादय त्वं
मुनिमचिरेण नयाम्यहं पुरीं त्वाम् ।

---

१. 'सहर', २. 'वमासीः' ग. पाठः. ३. 'न्ना' ख. पाठः.
४. 'न' क. ग. पाठः.

प्रभवति हि सतामयं प्रसाद-

श्चिरमुदयाय तथान्यथान्यथा स्यात् ॥ ३७ ॥

इति मुहुरनुनीय साश्रुकण्ठीं

निजनगरीं प्रति निर्ययौ नरेन्द्रः ।

कथमपि विवशां विनापि कान्तां

दिवसहतामिव चन्द्रिकां शशाङ्कः ॥ ३८ ॥

सरथ(र ? ह)य (प ? व)रः पुरीं प्रपेदे

विवृतकवाटदृशेव वीक्षमाणाम् ।

सकुतुकमिव पौरसुन्दरीणां

ध्वजपटपाणिपुटेन दर्शयन्तीम् ॥ ३९ ॥

अथ नरपतिसङ्गमानुरूपं

त्रिभुवनसारमधत्त गर्भमेषा ।

सलिलनिधिसमागमानुविद्धं

नवमिव मौक्तिकमम्बु ताम्रपर्णी ॥ ४० ॥

सपदि मृगदृशः पयोधरौ तौ

जलधरमेचकचूचुकावभूताम् ।

असितपटपिधानगोपितार्थौ

मणिकलशाविव राजभोगयोग्यौ ॥ ४१ ॥

स्फुटतरमुदरे शकुन्तलायाः

सुनिभृतमाशु विवेश दानवारिः ।

ग्रदयमनुपदं विवर्धमानः

क्षणमपहृत्य बलिश्रियं जजृम्भे ॥ ४२ ॥

---

१. 'चिताय' ग. पाठः.

नरपतिविरहव्यथावती सा
न च किल दौहृदवेदनां दधार ।
द्विरदवरवियोगदुःखिता किं
वनकरिणी कबलस्पृहां करोति ॥ ४३ ॥

मुनिरपि पुनरेत्य तां तनूजां
भरणकृतामपि वत्सलो नितान्तम् ।
चटुलगतिमवेक्ष्य जातसत्त्वां
निजतनयामिव जह्नुरभ्यनन्दत् ॥ ४४ ॥

शिशुमखिलनरेश्वरं विधास्यन्
मुनिरथ पुंसवनादि कर्म चक्रे ।
विदधाति परमाशिषोऽपि लक्ष्मी-
मतिमहतां किमुत स्वयंक्रियास्ताः ॥ ४५ ॥

नरपतिवचनं प्रतीक्षमाणा
प्रसवविलम्बमधत्त सा प्रसह्य ।
कथमपि च चिरादसूत पुत्रं
क्षितिवहनक्षममादिपोत्रिणीव ॥ ४६ ॥

उदयति विमले कुमारचन्द्रे
सपदि दिशः कुमुदोज्ज्वलाः प्रसेदुः ।
उपरि सुरपयोधिरेधमानः
कृतपटहध्वनिरुच्चकैर्ननर्त ॥ ४७ ॥

नरपतिरमुना समो न भूतो
न भवति नैव भविष्यतीति वाणी ।

सुरपतिभवनात् प्रवर्तमाना
प्रसवकृतां रुजमुज्जहार मातुः ॥ ८४ ॥

मुनिरमुमतिलोकशक्तियुक्तं
तदनु ततान स जातकर्मणामौ ।
कृतनियममुपाहितं कृशानुं
भुवि पवमानमुखेन कर्मणेव ॥ ४९ ॥

नरपतितनयस्य बाललीला-
प्यभवदमुष्य कुलोचितैव नूनम् ।
भुजबलमवलम्ब्य विक्रमैर्यत्
क्षितिपरिवेष्टनमुल्बणं बभूव ॥ ५० ॥

मुनिवरनयनामृतप्रसूतेः
सकलमनोहरसौकुमार्यधाम्नः ।
अनुदिवसमवर्धतास्य तेजः
सह वपुषा शरदीव शीतरश्मेः ॥ ५१ ॥

मदकरिषु निसर्गबान्धवाद्वा
मृगपतिशब्दविशेषमत्सराद्वा ।
द्विपरिपुमवधीच्चपेटयासौ
वनकरिणां कुलमारुरोह भूयः ॥ ५२ ॥

परिमितवयसोऽपि तस्य शक्तिः
सुरपरिपन्थिषु भीषणा बभूव ।
अनतिपरिणतापि सप्तसप्ते-
र्भवति भयाय हि कौशिकेषु दीप्तिः ॥ ५३ ॥

मुनिजनमखभङ्गदुर्विनीतान्
दितितनयानवधीत्स मुष्टिघातैः ।
विनयनमसतां सतां च गुप्तिः
प्रकृतिरियं खलु पूरुवंशजा[1]नाम् ॥ ५४ ॥

दनुजवधकृताथ तस्य कीर्त्तिः
सुरपतिसद्मनि किन्नरोपगीता ।
नयनदशशतीं प्रमोदबाष्पैः
शिशिरयति स्म चिराय गोत्रशत्रोः ॥ ५५ ॥

मुनिरमुमुपनीय वेदविद्याः
स्वयमदिशत् सकलाः सहार्थशास्त्रैः ।
सकलमपि सशास्त्रमस्त्रजालं
कलितमनेन निजान्निजादधीशात् ॥ ५६ ॥

शकुन्तला कमितुरपत्यमर्पितं
सुखावहं तदिदममंस्त मानिनी ।
अकृत्रिमा धनमिव कालवर्धितं
सनीविकं विबुधजनैकसाक्षिकम् ॥ ५७ ॥

इति कृष्णविरचिते भरतचरिते अष्टमः सर्गः ॥

---

## अथ नवमः सर्गः ।

अथ तां महिषीं महीभुज-
स्तनयान्दोलितपाणिपल्लवाम् ।
करिणीमिव पोतलोलितां
मुनिरूचे नयशालिनीं गिरम् ॥ १ ॥

---

१. 'भाजाम्' ग. पाठः.

नगरीं व्रज सम्पदाश्रया-
मचलोत्सङ्गविहारिणी सती ।
त्वमवाप्तकुमारसंभवा
भज गौरीव तमीश्वरं पतिम् ॥ २ ॥

विनयेन लभेत नीतिमा-
न्नृपसूनुर्युवराजतामयम् ।
विनिहन्त्यतिरागलोलुपः
कुलमारण्य इवाग्निरुत्थितः ॥ ३ ॥

मदरागपरो नृपात्मजः
पितुराच्छेत्तुमपीच्छति श्रियम् ।
कथमामिषमग्रतः स्थितं
चपलस्त्यक्ष्यति सिंहशावकः ॥ ४ ॥

अतिरक्तमनर्थकारिणं
तनुजन्मानमुपेक्षितोन्नतिम् ।
अचिरेण हिनस्ति शस्त्रवान्
पिटकं दुष्टमिव क्षितीश्वरः ॥ ५ ॥

अवमानकृशानुतापितं
तनयाष्टापदमिष्टमात्मनः ।
भुवि कञ्चन रत्नभाजनं
कुरुते साधु परीक्ष्य भूपतिः ॥ ६ ॥

अपि दृप्तमनर्थकारिणं
वृषभं दुष्टमिवात्मजं नृपः ।

न विमुञ्चति योजयत्यमुं
बहुशः क्लेशकरेषु कर्मसु ॥ ७ ॥

यदि मुञ्चति किञ्चिदीदृशं
स हि मन्त्रैरविचिन्त्यशक्तिभिः[1] ।
नृपभोग[2]विषेण मूर्च्छितं
परमुत्थापयितुं समीहते ॥ ८ ॥

अहिरेव हि रत्नशालिभि-
र्नृपसूनुर्नियमेन रक्ष्यते ।
यदि विन्दति रन्ध्रमेकदा
सहसा हन्ति फणीव रक्षिणम् ॥ ९ ॥

तदसौ पितुरेव शासनं
वहतां मूर्ध्नि विनीतमानसः ।
नृपमौलिनवाङ्कुरश्रियः
कुशलं बीजमिवैकमर्पितम् ॥ १० ॥

न पुनस्स्वयमर्थयेदसौ
नृपनिर्बन्धमृते नृपश्रियम् ।
नहि कालविपाकवर्जितं
फलमास्वाद्यतमं भविष्यति ॥ ११ ॥

त्वमपि प्रियसंपदर्थिनी
भव मा गाः सुतसंपदि त्वराम् ।
पतनाय भवत्यपक्षतेः
शुकपोतस्य समुत्पतिष्णुता ॥ १२ ॥

---

१. 'शिक्षिभिः' क. पाठः. २. 'गि' क. ग. पाठः.

महिषीमपि नैव विश्वसेत्
तनयैश्वर्यवशान्नरेश्वरः ।
हृदयं परिशोध्य विश्वसे-
दथवा ग्राहवतीं नदीमिव ॥ १३ ॥

चिकुरे मुकुरे गृहोदरे
शयने वा महिषीं महीपतिः ।
भुजगीमिव गेहवर्तिनीं
सुतनिघ्नां न विशङ्कते कथम् ॥ १४ ॥

भुवि सन्ति तथाविधाः स्त्रिय-
स्तनयैश्वर्यविमूढचेतसः ।
परिणेतरि पापवृत्तयः
कृपणानां हि मलीमसाः श्रियः[1] ॥ १५ ॥

त्वमतः प्रणिधानशालिनी
कुरु भर्त्तुर्हितमात्मनो हितम् ।
स च वेत्ति तवेङ्गितैर्मनः
सुरसिन्धोरिव वारि निर्मलम् ॥ १६ ॥

परिलालय राजवल्लभान्
नृपविद्वेषिषु मा कृथाः प्रियम् ।
शिवमाचर तस्य सन्ततं
नहि कल्याणकृतां विपत्तयः ॥ १७ ॥

युवयोर्नयतत्त्ववेदिनोः
समये स्मारयितुं मयोदितम् ।

---

१. 'स्त्रि क. ख. पाठः.

निपुणोऽपि जनः क्रियाकुलः
प्रकृतेः[1] कर्मणि को न मुह्यति ॥ १८ ॥

हृदयेन वहन्नपि[2] प्रियां
भवतीं रत्नमयीमिव स्रजम् ।
नृपतिर्मम शासनेच्छया
पुरुषान् प्रेषयितुं विलम्बते ॥ १९ ॥

इति वास्मदनुग्रहान्मुहु-
र्महिमानं लभतामयं सुतः ।
हिमरश्मिकरादिवार्णवः
पवमानादिव दावपावकः ॥ २० ॥

अथवा जनवादशङ्कया
त्वयि दैवीं गिरमर्थयत्यसौ ।
अविवेकतिरस्कृता[3]त्मनां[4]
पिशुनानां खलु दुःश्रवं वचः ॥ २१ ॥

तदिह स्मर नित्यवत्सलां
त्वयि माध्वीमुचितानुवर्तिनीम् ।
ससुतां भवतीं विहायसा
खगमा सा शिबिकेव नेष्यति ॥ २२ ॥

इति सा मुनिना समीरिता
घनबाष्पाम्बुविकुण्ठितस्वरा ।

---

१. 'ते', २. 'व' क. पाठः. ३. 'रता', ४. 'नां नृणां पि' ख. पाठः.

प्रतिशब्दितुमुद्यताभवद्
गुणदोषोपहतेव वल्लकी ॥ २३ ॥
मम पथ्यमपि त्वयेरितं
हृदि दुःखान्तरमातनोति तत् ।
नहि किञ्चन पथ्यमेव यद्
बहुदोषप्रकृतेरिवौषधम् ॥ २४ ॥
पितरि त्वयि जातमात्रया
भरणस्नेहरसोऽयमार्जितः ।
कथमद्य निरस्यते मया
हितकृद् देह इवायमात्मनः ॥ २५ ॥
महिषी च महीपतेरहं
परवत्यस्मि स मे परा गतिः ।
अनयोः पुनरेकवृत्तिता
नहि बाल्यस्थविरत्वयोरिव ॥ २६ ॥
करणीयमसंशयं वच-
स्तव वेदस्य च तत्त्ववादिनः ।
अपि वेदवचः क्वचित् भवे-
दयथार्थं न तथा भवद्वचः ॥ २७ ॥
अथ हारमनोज्ञतारका
मुखशीतद्युतिकान्तिहारिणी ।
रजनीव शरीरधारिणी
भुवि माध्वी ददृशे तयोः पुरः ॥ २८ ॥

१. 'मयार्जि' ख. पाठः.

प्रणिपत्य मुनिं जगाद सा
  कृतकृत्योऽसि क एष ते जनः।
अथवा निजकार्यनिःस्पृहः
  परकार्यैकपरो हि सज्जनः ॥ २९ ॥

सुरकार्यकृताभिसन्धिना
  भवतैषा परिरक्षिता वधूः।
विजयार्थमसूत सा सुतं
  कुशला शक्तिरिवाप्तमन्त्रजा ॥ ३० ॥

मुनिरप्यवदत् सुराङ्गना-
  मथ संभाव्य यथार्हमर्हणैः।
वशगामिव मन्त्रदेवतां
  निजनामस्मरणादुपस्थिताम् ॥ ३१ ॥

शिशुरेव मयाभिरक्षिता
  भवतीनां तनया मयि स्थिता।
अधुना पुनरीदृशीं दशां
  प्रतिपन्ना किमियं विधास्यति ॥ ३२ ॥

कमितारमसौ नराधिपं
  भजतां सम्प्रति वीरसूः स्वयम्।
कुसुमावनतेव मालती
  सदृशोच्छ्रायमुपभ्रपादपम् ॥ ३३ ॥

सदृशप्रसवानुबन्धिनीं
  विलसत्पल्लवकान्तिधारिणीम्।

त्वमिमां क्षितिभर्तुरन्तिकं
नय सन्तानलतामिवेप्सिताम् ॥ ३४ ॥

स च मद्वचनादिदं त्वया
विजने व्यक्तमुदीर्यतां वचः ।
नहि संसदि नीतिशालिभि-
र्निजकार्ये विनियुज्यते प्रभुः ॥ ३५ ॥

इयमस्मदुपाश्रयावधू-
स्तव दिष्ट्या महिषी किलाभवत् ।
अधुना तव सद्म नीयते
मुनिषु न्यास इवार्पिता त्वया ॥ ३६ ॥

इदमेकमिहार्थ्यते भवा-
नपहास्या न भवेदियं जनैः ।
प्रभुचित्तमजानती स्वयं
नृपमेनं वृतवत्यसाविति ॥ ३७ ॥

अथवा सकलस्य रक्षितु-
स्तव दारेषु किमुच्यते मया ।
पितुराकुलमेव सन्ततं
दुहितृस्नेहमयं हि मानसम् ॥ ३८ ॥

न च वेत्सि न वक्तुमीदृशं
न तवान्या ससुता शकुन्तला ।
तदुदीरय पथ्यमेतयो-
रुचितं वा नृपसन्निधिं गता ॥ ३९ ॥

इति तां कथयन्मुनिः स्वयं
क्षणमास्राम्बुनिरुद्धवागभूत् ।
अरुदत् सुतरां शकुन्तला
रुदितप्राय इवाश्रमोऽप्यभूत् ॥ ४० ॥

अथ तन्मुनिशासनं दधौ
गुरु माध्वी च तथेति वादिनी ।
कुसुमं सुरवल्लरीव सा
फलजन्मानुगुणं दिवौकसाम् ॥ ४१ ॥

परिगृह्य भुजे शकुन्तला-
मथ दुःषन्तसुतं भुजान्तरे ।
द्रुतमुत्पतिता सुराङ्गना
दिवि हंसीव गृहीतपोतका ॥ ४२ ॥

मरुतानुगुणेन गच्छतां
दिवि तेषां घनमण्डलं घनम् ।
कृतमातपवारणं महे-
न्मणिदण्डीकृतशक्रकार्मुकम् ॥ ४३ ॥

मणिहर्म्यकरैरुदञ्चितैः
श्रियमाक्रष्टुमिवोद्यतां दिवः ।
अचिरादिव ते नभस्स्थला-
दवतेरुर्नगरीं नरेशितुः ॥ ४४ ॥

अथ कञ्चुकिभिर्निवेदिताः
कनकस्तम्भसहस्रकेसरम् ।

---

१. 'ह्राम' ख. पाठः.

नृपमन्दिरमिन्दिराश्रयं
विविशुस्ते भ्रमरा इवाम्बुजम् ॥ ४५ ॥

ददृशुर्मणिविष्टराश्रयं
कमलोल्लासकरं नरेश्वरम् ।
उदयाचलशृङ्गसङ्गिनं
दिवसाधीशमिवोज्ज्वलद्द्युतिम् ॥ ४६ ॥

शिरसैव दधार साञ्जलिं
परिणेतुः प्रणता शकुन्तला ।
वदनेन्दुरुचेव मीलितं
भुजनालद्वयमेकमम्बुजम् ॥ ४७ ॥

घनमाचरणभ्रु लज्जया
धवलक्षौमपटावकुण्ठिता ।
विरराज तदा शकुन्तला
शरदभ्रावरणेव चन्द्रिका ॥ ४८ ॥

धवलातपवारणादृते
सितबालव्यजनद्वयं विना ।
उदितः सुरयोषिता तया
नृपसूनुः पितुरग्रहीत् पदम् ॥ ४९ ॥

विजयस्व विशामधीश ! मां
ननु माध्वीर्मधुना स्मरिष्यसि ।
नहि जातुचिदाश्रितो जनः
सुजनानां हृदयान्निवर्तते ॥ ५० ॥

---

१. 'व' ख. पाठः. २. 'त्य' क. पाठः. ३. 'स्मासि' ग. पाठः

परिणीय तपोवने त्वया
नवगर्भा निहिता शकुन्तला ।
अथ केसरिणीव वीरसूः
सुतमेनं सुषुवे सुमध्यमा ॥ ५१ ॥

तदसौ तव सूनुरिष्यतां
तव चैषा[1] महिषी शकुन्तला ।
इह कण्वनियुक्तया मया
त्वदुपान्तं विपिनादवापितौ ॥ ५२ ॥

इति साहितसारमेतयो-
र्मुनिसन्दिष्टमुदीर्य भूभुजे ।
विरराम गिरामविस्तरः
प्रभुतन्त्रे हि नितान्तमिष्यते ॥ ५३ ॥

प्रियदारसुतावलोकना-
दलमन्तर्हृषितोऽपि पार्थिवः ।
पिदधे जनवादशङ्कया
विकृ(ति ? तिं) छद्मकृतामिव श्रियम् ॥ ५४ ॥

प्रतिकूलमिवोपचक्रमे
प्रतिवक्तुं[2] परिशोधयन् प्रियाम् ।
कनकस्य हि शुद्धिरिष्यते
दहनच्छेदनिकाषलक्षणा ॥ ५५ ॥

मुनयः खलु सत्यवादिनः
त्वमपि प्रत्ययिता तथाप्यहम् ।

---

१. 'चैवं म' ग. पाठः. २. 'वि' क. पाठः.

न च वेद्मि मया कृतं कुतः
स्वकृतं कः प्रतिबोध्यते परैः ॥ ५६ ॥
बहुकैतवकोविदाः स्त्रियो
नहि तासामवशः पुमान् भुवि ।
इति मास्तु मदाश्रया कथा
विकलङ्काः खलु पौरवेन्दवः ॥ ५७ ॥
इह भव्यसुता समागता
वनिता रूपवती कुतश्चन ।
अधुना महिषी नृपस्य से-
त्ययशो नूतनमातनोमि किम् ॥ ५८ ॥
अथ तस्य गिरं सुराङ्गना
हिपरामन्यपरा च संवृतिम् ।
अवधार्य तथैव सावद-
न्मतिरेका हि मनीषिणां मिथः ॥ ५९ ॥
स्वयमाचरितं न वेत्सि चेत्
परवृत्तान्तपरीक्षया कृतम् ।
ननु चारदृशा महीतलं
सकलं पश्यति यः स पार्थिवः ॥ ६० ॥
इदमद्भुतमद्भुताद्भुतं
भवता यद् ध्रियते वसुन्धरा ।
अथ कीर्त्तिरतर्तिभूभुजा-
मिह राज्ञीव भुनक्ति भूतलम् ॥ ६१ ॥

१. 'प्र' क. पाठः. २. 'प्रति' क. पाठः. ३. 'च' ख. पाठः.

अवनेरवने हि लाघवं
भवता भव्यधिया विभावितम् ।
अवधानमृतेऽपि यद् द्विषां
शिरसि स्थापितमात्मना पदम् ॥ ६२ ॥

न भवानिव पार्थिवोऽभव-
न्न भविष्यत्यधुना न वर्तते ।
यदसौ तव सत्यवादिता
यदिदं बुद्ध्यवधानमीदृशम् ॥ ६३ ॥

धनमर्थयते शकुन्तला
यदि हेमाचलशृङ्गसम्मितम् ।
धनदादपि हर्तुमीश्वर-
स्तनयोऽस्याः सशरं वहन् धनुः ॥ ६४ ॥

इति धीरमुदीरितस्तया
नृपतिर्ध्याननिमीलितेक्षणः ।
सुखसुप्त इवाभवत् क्षणं
दयितापत्यसमागमोत्सवे ॥ ६५ ॥

अश्रृणोदशरीरिणीं गिरं
जनसन्तापहरां जनाधिपः ।
घनघोषमनोहरस्वरां
नभसो वृष्टिमिवाथ तां नवाम् ॥ ६६ ॥

प्रतिबिम्बमिवात्मसम्भवं
निजसादृश्यधरं महीपते! ।

---

१. 'द्ध' क. ग. पाठः.

बिभृहि त्वममुं कुलाङ्कुरं
तव सत्यं महिषी शकुन्तला ॥ ६७ ॥

इति नाकसद्मनि विजृम्भितां गिरं
नृपतिर्निशम्य परिषस्वजे सुतम् ।
मुमुदे च मूर्ध्नि मुखमर्पयन् मुहुः
क्षितिभारविश्रमसुखादिवात्मजे ॥ ६८ ॥

इति कृष्णविरचिते भरतचरिते नवमः सर्गः ॥

---

## अथ दशमः सर्गः ।

अथ नाम्ना सुतं चक्रे भरणाद् भरतं नृपः ।
किन्नरीव यशो यस्य वाणी गायत्यकृत्रिमा ॥ १ ॥

शङ्खचक्राङ्कितकरं स सूनुं दैत्यसूदनम्[1] ।
उपेन्द्रमिव देवेन्द्रो यौवराज्येऽभिषिक्तवान् ॥ २ ॥
सर्वसंभारसंभिन्नैरम्भोभिर्गलितैरधः ।
भर्त्रा सहाभिषिक्तेव विरराज वसुन्धरा ॥ ३ ॥
नूनं यूनि कृतोत्कण्ठा तस्मिन् गूढमुपाश्रिता ।
अभिषेकाम्बुभिः स्पष्टा[2] राजलक्ष्मीरलक्ष्यत ॥ ४ ॥
बिभ्राणः शिरसा मौलिं युवराजो रराज सः ।
उदयाद्रिरिवोत्तुङ्गशृङ्गोल्लसितभास्करः ॥ ५ ॥
विचित्रै[3]रत्नकटको हारपाण्डरनिर्झरः ।
लोकपालाश्रयः श्रीमानसौ मेरुरिवाबभौ ॥ ६ ॥
कर्णपाशद्वयी तस्य बभौ समणिकुण्डला ।
आबद्धरत्नफलका दोलेव वदनश्रियः ॥ ७ ॥

---

१. 'देवनन्दनम्', २. 'स्पृ', ३. 'त्रचित्रक' ग. पाठः.

शतपत्रमिवामुष्य श्वेतमातपवारणम् ।
उद्धूतं चामरद्वन्द्वहंसदोलायिताञ्चलम् ॥ ८ ॥

रञ्जयामास भरतो रक्तामपि वसुन्धराम् ।
दुःषन्तोऽपि तथाभूतां कृतकृत्यः शकुन्तलाम् ॥ ९ ॥

एकः सत्राणि कर्माणि चकार भरतः स्वयम् ।
तान्येव बहुभिः सार्धं दुःषन्तस्तु चकार सः ॥ १० ॥

शक्त्या युक्तोऽथ भरतः प्रतापैरजयन्महीम् ।
स शकुन्तलया साकं दुःषन्तः क्रतुभिर्दिवम् ॥ ११ ॥

तातः शास्त्रेण शास्योऽभूत् तातेन तनयो वशी ।
तेन पृथ्वीति तद्राज्यं ससोपानमिवाबभौ ॥ १२ ॥

परस्पराविरोधेन यथाकालानुरोधनम् ।
स मन्त्रिवर्गः संभूय तौ सिषेवे यथोचितम् ॥ १३ ॥

भरते स्थापिते राज्ये विद्विषस्तस्य तेजसा ।
यातास्ते दूरमाशासु तिग्मांशोरिव कौशिकाः ॥ १४ ॥

शासनं युवराजस्य तस्य नूनं महीभुजः ।
अभ्यर्थ्य शिरसा श्लाघ्यं किरीटमिव लेभिरे ॥ १५ ॥

तस्य प्रतापदीप्तांशौ दीप्यमाने दिवानिशम् ।
नक्तञ्चरैरपि प्रायः स्खलितं न पदात्पदम् ॥ १६ ॥

लब्धप्रशमनोऽप्येष नीतिं नैव मुमोच सः ।
अङ्गवृद्धिकरीं सिद्धां स्वस्थः पथ्याशितामिव ॥ १७ ॥

स प्रायुङ्क्त नयं प्राज्ञः कालदेशावलङ्घयन् ।
चललक्षानुसारीव शरमोक्षं विचक्षणः ॥ १८ ॥

---

१. 'प्रकृतिद्वयम्' ख. पाठः.

प्रजावृत्त्य[1]विरोधेन काले काले महीपतिः ।
दुदोह गामिमां पुण्यां रत्नक्षीरामनामयाम् ॥ १९ ॥

अरातिकामदहनमशेषालोकनक्षमम् ।
तस्य चाराह्वयं चक्षुस्तृतीयमभवद् विभोः ॥ २० ॥

कोदण्डपाणिना तेन नियम्योऽभून्न कश्चन ।
तदाज्ञया निवृत्ता यत् प्रजास्ताः पापकर्मणः ॥ २१ ॥

भरते शासति महीं व्याधानां कूटविग्रहः ।
प्रवाद उपसर्गाणां विषादो बर्हिणामभूत् ॥ २२ ॥

कृषीवलाः खलाधाराः कुलायमुखराः खगाः ।
परस्वाप[3]हराः सूतास्तस्मिन् पालयति क्षितिम् ॥ २३ ॥

परागस्तारका वाताः सत्पथोल्लङ्घिनो घनाः ।
वंशकण्टकिनः शैला बभूवुस्तस्य शासने ॥ २४ ॥

अथ तस्याभवन् भार्यास्तिस्रो वैदर्भसंभवाः ।
समग्रगुणसम्पन्नाः कृतयः सुकवेरिव ॥ २५ ॥

स ताभिः शुशुभे राजा तिसृभिर्धर्म्यवृत्तिभिः ।
श्रुतिभिर्मूर्तियुक्ताभिर्धर्मो विग्रहवानिव ॥ २६ ॥

अथ तस्य पिता पुण्यैरगण्यैश्चिरसंभृतैः ।
जरयेव भृशोद्विग्नो नित्यां निर्जरतामगात् ॥ २७ ॥

मन्त्रिवृद्धास्ततस्तस्य समिद्धं शोकपावकम् ।
विवेकवारिधाराभिः शमयांचक्रिरे शनैः ॥ २८ ॥

पितुः पुरोधसा साकं स विधायोत्तरां क्रियाम् ।
अर्थिनस्तोषयामास न तु रन्ध्रार्थिनो रिपून् ॥ २९ ॥

---

१. 'नु' ख. पाठः. २. 'यम्' क. पाठः. ३. 'रताः सू' ख. पाठः.

प्रायेण स्वप्रतापोऽपि पित्रा तस्मिन्निचिक्षिपे ।
अप्रधृष्यः प्रतापोऽभूत् तदनन्तरमस्य यत् ॥ ३० ॥
शनैर्मृदुकराक्रान्ता सानुरागा वसुन्धरा ।
भोगयोग्या बभूवास्य नवोढेव भृशानता ॥ ३१ ॥
आद्यन्तगुणबन्धेन नमितास्तस्य भूभुजः ।
परप्रहरणार्थाय चापदण्डा इवाभवन् ॥ ३२ ॥
साम सौम्येक्षणं तस्य दानं मौलौ पदार्पणम् ।
भेदो वैरिषु सौजन्यं दण्डः कोदण्डधारणम् ॥ ३३ ॥
नीतौ निर्लोठितास्तेन वीणायामिव षड्गुणाः ।
प्रयोगकौशलादर्थान् रागानिव वितेनिरे ॥ ३४ ॥
अचिन्त्यशक्तिराक्रामन् जगतीं जगतीपतिः ।
वर्धयामास राज्याङ्गान्यात्माङ्गानीव वामनः ॥ ३५ ॥
गूढमन्त्रोद्भवोऽप्यस्य प्रथितोऽभूत् पराक्रमः ।
अलक्ष्यबीजविक्षेपो महानिव वटद्रुमः ॥ ३६ ॥
अथ स्वच्छाम्बरच्छाया पद्मोपायनधारिणी ।
शरदेनमनुप्राप्ता दूतीव[1] विजयश्रियः ॥ ३७ ॥
[2]हंसमन्दपदन्यासा निवृत्तघनघट्टना ।
षट्पदौघपटच्छन्ना निभृतेवाभिसारिका ॥ ३८ ॥
प्रावृड्घनमषीपातकल्माषमुषितद्युतिम् ।
आदर्शमिव कुर्वाणा धवलं[3] धवलद्युतिम् ॥ ३९ ॥
पद्मिनीनामभिमतं प्रावृषा क्वापि गोपितम् ।
दर्शयन्ती पुनर्दक्षा दूतीव तपनद्युतिम् ॥ ४० ॥

१. 'सखीव' क. पाठः. २. 'मत्तहंसप', ३. 'ला' ख. पाठः.

सद्वर्त्म पिहितं मेघैः शरदा विशदीकृतम् ।
अभूद् दोषाकरः शुद्धस्तपनस्तपनोऽप्यभूत् ॥ ४१ ॥
स्वच्छमभ्रमरं रेजे रेजे सभ्रमरं सरः ।
शालयः कणिकां भेजुर्जलदाः कणिकां जहुः ॥ ४२ ॥
शिखण्डिभिरत्यक्तमदैः केकालीला विवर्जिता ।
उत्फुल्लकमले हंसैः के का लीला विवर्जिता ॥ ४३ ॥
पाण्डरैः पवनोद्धूतैः पयोदैर्द्यौरराजत ।
निसर्गलघुभिस्तूलैः समाकीर्णेव शल्मलिः ॥ ४४ ॥
आश्यानघनजम्बालं तारामुक्तास्तृतं नभः ।
अगस्त्यपीतनिस्तोयमनुचक्रे* पयोनिधिम् ॥ ४५ ॥
विद्युत्स्वर्णशलाकानां काषशाणान्नभस्तलात् ।
रेखास्वर्णमिवोन्मृष्टं शरदा शक्रकार्मुकम् ॥ ४६ ॥
मलीमसघनाश्लेषैर्दूषितेव नभस्थली ।
ज्योत्स्नासुरसरित्तोये गाहते स्म मुहुर्मुहुः ॥ ४७ ॥
प्रणम्येव प्रियां रात्रिं प्रसारितकरः शशी ।
प्रसादयामास मुहुः प्रवासकलुषीकृताम् ॥ ४८ ॥
आशा विशालाः सञ्छन्नाः सचित्रा जीवनार्थिना ।
प्रसारितकरेणाशु कृपणेनेव दर्शिताः ॥ ४९ ॥
संभोक्तुं सरितां सारं प्रच्छन्नैः करपातनैः ।
वेगमम्बुधियात्रायां मन्दीचक्रे दिवाकरः ॥ ५० ॥
स्निग्धशुद्धात्मपक्षाणां वाहिनीमध्यवर्तिनाम् ।
उत्थानं राजहंसानां बभूव विजये क्षमम् ॥ ५१ ॥

---

* इह तङ् चिन्त्यः ।

सारसाकुलिताम्भोजवदनेन सरोजिनी ।
भृङ्गस्वरेण गायन्ती राजहंसानतोषयत् ॥ ५२ ॥
रक्ता इव करन्यासैरह्नामीशस्य रागिणः ।
हृदयं दर्शयामासुर्गम्भीरमपि निम्नगाः ॥ ५३ ॥
कदम्बशाखां संत्यज्य जीर्णामकुसुमोद्गमाम् ।
मधुव्रताः किं नलिनीं व्रतभङ्गभयाद् ययुः ॥ ५४ ॥
नलिनीषु बभूव श्रीर्जातालीनां च सा श्रिये ।
आश्रितेषु हि दृश्यन्ते गुणभाजां हि सम्पदः ॥ ५५ ॥
अनुकूलमुपश्लिष्य कुर्वन् दन्तक्षतिं मुहुः ।
ममर्द निम्नगां गाढं रममाणो मतङ्गजः ॥ ५६ ॥
तदाशुकव्रयः प्राप्य बध्नन्तो मधुरां गिरम् ।
कणिकादानलुब्धेन निरस्ताः शालिशालिना ॥ ५७ ॥
नाम्ना राजापि नक्षत्रैः शुशुभे दिवि चन्द्रमाः ।
भरतस्तु महाराजः क्षत्रैरुर्व्यामराजत ॥ ५८ ॥
इत्थं शरदमालक्ष्य दीप्तां शक्तित्रयीमिव ।
यानमावेदयामासुर्भरतस्याथ मन्त्रिणः ॥ ५९ ॥
वेत्ति वेद्यं भवान् सर्वं तथाप्यस्माभिरुच्यते ।
विजानन्तोऽपि विज्ञाप्याः प्रभवो ह्यनुजीविभिः ॥ ६० ॥
यानकालममुं प्राहुः कालं शक्तोऽप्यपेक्षते ।
अकाले निहितं बीजं न शक्तमपि रोहति ॥ ६१ ॥
अत्युष्णे निर्जले काले यातुः सीदन्ति दन्तिनः ।
दन्तिभिर्दुस्तरा सेना भीमग्राहैरिवापगाः ॥ ६२ ॥

---

१. 'श्र' ग. पाठः

ततः शरदि याहि त्वं विषयं प्रति विद्विषाम् ।
तत्र नम्राननाः पश्य शालीः शत्रुवधूरिव ॥ ६३ ॥
पक्कसस्यानि राष्ट्राणि द्विषतां प्राप्य तावकाः ।
वृत्त्याक्षेपेण वर्तन्तां गर्जन्तः सैनिकर्षभाः ॥ ६४ ॥
शक्तौ यातव्यमित्येके परव्यापदि केचन ।
तव नैसर्गिकी शक्तिर्वह्नेरिव परान् प्रति ॥ ६५ ॥
अतन्त्रं हि परव्यापत् मानिनः शक्तिशालिनः ।
केसरी किं मदाक्रान्तं नाक्रामति मतङ्गजम् ॥ ६६ ॥
भिन्नमुख्यं बलं कुर्यात् पृष्ठतः पार्ष्णिशुद्धये ।
कर्षन्त्यभिन्नसङ्घातं सूत्रप्रोतमिवारयः ॥ ६७ ॥
पृष्ठकोपावरुरणस्य पुरैः सिद्धिः सुदुर्लभा ।
च्छिन्नमूलस्य वृक्षस्य नहि मूर्धा फलिष्यति ॥ ६८ ॥
सुपर्ण इव सत्पत्रैर्भीषणः परपक्षिणाम् ।
आवेष्टितो महानागैः स्कन्धावारो निवेश्यताम् ॥ ६९ ॥
परिशोध्य परच्छन्नगर्तशूलादिकं भुवि ।
क्रियतां सैन्यविन्यासः पदन्यास इवाम्भसि ॥ ७० ॥
न शत्रुरवमन्तव्यः स्वदेशबलगर्वितः ।
अम्भःप्रविष्टमाक्रष्टुं ग्राहः शक्नोति दन्तिनम् ॥ ७१ ॥
आत्मानं गोपयन्नेव शक्तोऽप्याक्रामति द्विषम् ।
कृशानुः संहरत्यम्भः कुम्भस्थं न सरिद्गतम् ॥ ७२ ॥
रुद्ध्वा परपुरद्वारं मिथो बद्धक्रमा चमूः ।
अरातिमृगपूगस्य वागुरेव निवेश्यताम् ॥ ७३ ॥

१. 'प्र' ख. ग. पाठः. २. 'नः' क. ख. पाठः

इत्थमुत्थानमावेद्य स्वयमुत्तस्थुषः प्रभोः ।
प्रणम्य मन्त्रिणस्तस्थुः सिद्धा इव हरेः पुरः ॥ ७४ ॥
सम्भाव्य भारतीं तेषां बभाषे भरतस्तदा ।
विज्ञापनाभिमुख्यं हि स्वामिनः प्रेमलक्षणम् ॥ ७५ ॥
हितं च मधुरं चेह यद् भवद्भिरुदीरितम् ।
प्रीत्या मया गृहीतं तन्मधुमिश्रमिवौषधम् ॥ ७६ ॥
प्रसिद्धमपि वक्तव्यं सचिवैः कालवेदिभिः ।
धिषणस्यापि धिषणा तत्र व्यग्रस्य मुह्यति ॥ ७७ ॥
नीतिमानपि न स्वामी विनामात्यैरुदेष्यति ।
नह्यनाधोरणो हस्ती शिक्षितोऽपि रणक्षमः ॥ ७८ ॥
हेतिमात्रेण मित्रेण काष्ठान्तेषु चराम्यहम् ।
अनुयान्तु भवन्तो मां कृशानुमिव मारुताः ॥ ७९ ॥

वीरः श्रवःसुखमुदारमुदीर्य वाक्यं
प्रातः प्रयाणमिति घोषयति स्म भेरीम् ।
सा घोषणा घनघटेव विजृम्भमाणा
वृष्टिं शशंस शरजालमयीं भवित्रीम् ॥ ८० ॥

इति कृष्णविरचिते भरतचरिते दशमः सर्गः ॥

---

## अथैकादशः सर्गः ।

अथ दिशां विजयाय विशांपतिः
स नगरान्निरगादरिमर्दनः ।
बलभरेण घनं परिमर्दयन्
प्रणयिनीं प्रमदामिव मेदिनीम् ॥ १ ॥

वपुषि तस्य निचिक्षिपुरुच्छ्रितं
मणिसुधातलमेत्य पुराङ्गनाः ।
विजयमङ्गललाजपरम्परां
कुसुमवृष्टिमिवामरयोषितः ॥ २ ॥

अनुगुणः प्रसरन् पथि मारुतः
क्षितिपतेरधिरूढवतो रथम् ।
ध्वजपटाग्रकरेण विनिर्दिशन्
दिशमिवोपदिदेश यियासतः ॥ ३ ॥

कृतयुगस्थितिरेष धुरं वहन्
दिशि[1]दिशि प्रथितः प्रथयन् गतिम् ।
हरिरयाद[2]रिचक्रमनुद्रुतः
स्वयमिवाध्वनि तस्य रथो बभौ ॥ ४ ॥

स्वयममुं परतापकरं प्रभुं
न परितापयितुं प्रभुरंशुमान् ।
तदपि तस्य धराधिपलक्षणं
धवलमातपवारणमुद्धृतम् ॥ ५ ॥

कनकदण्डपरिभ्रमितं विभोः
शशिकरद्युति चामरयोर्द्वयम् ।
प्रणतिविग्रहसंशयितं द्विषां
हृदयमाशु विभक्तमिवाबभौ ॥ ६ ॥

प्रथममाप स शातमखीं दिशं
दिशि दिशि प्रसरन्नपि तेजसा ।

१. 'वश दिशः', २. 'नु' ग. पाठः.

समुदयः प्रथितोज्ज्वलतेजसो
भवति तां दिशमेत्य रवेरिव ॥ ७ ॥

रथतुरङ्गतरङ्गसुदुस्तरः
पृथुमतङ्गजपोतशताकुलः ।
सपदि राजनि मार्गमुपेयुषि
क्षितितलं प्रससार बलार्णवः ॥ ८ ॥

पथि मृदु प्रतिरोधकृतागसां
द्विरदखण्डितवप्रसुखाक्रमम् ।
क्षितिभृतां कटकं परिमर्दयन्
धनमनर्घमवाप्य पुनर्ययौ ॥ ९ ॥

तदनु मानबलेन निरुन्धतीं
प्रणयिनीमिव पूर्वदिगङ्गनाम् ।
तनुविमर्दवशादनुकूलयन्
विविधभोगकरीमकरोन्नृपः ॥ १० ॥

चटुलतालदलाङ्गुलिविभ्रमैः
र्जलतरङ्गमृदङ्गरवानुगैः ।
ललितनृत्तमिवास्य वितन्वती-
मुदधिपारभुवं भरतो ययौ ॥ ११ ॥

उपनतामनुरागवशात् स्वयं
न कलहेन चिराय पराङ्मुखीम् ।
अनुबभूव स सुह्मपतेः श्रियं
नववधूमिव नातिसमुद्धताम् ॥ १२ ॥

---

१. 'पास्य', २. 'तम् ।' ग. पाठः.

जगति विस्तृतकीर्त्तिलतावले-
गुरुमुपघ्नमिवोपपयोनिधि[1] ।
उपलदण्डमुदारपदाक्षरं
नरपतिर्निचखान जयाङ्कनम् ॥ १३ ॥

तदनु नौषु विशेषविचक्षणाः
स्थलचरा इव वङ्गमहीक्षितः[2] ।
जलधिमेत्य गतागतवेदिनो
विदधिरे भरतं धृतकार्मुकम् ॥ १४ ॥

तदनु मारुतमस्त्रमुदीरयन्
मणिगणानिव शङ्खवराश्रयान्[3] ।
पवननिर्धुतपोतसमाश्रया-
नयमसूनुदकर्षदुदन्वतः ॥ १५ ॥

जलमुचामिव मौक्तिकवर्षिणां
क्षितिभृतां क्षितिपालमहोदधिः ।
वितरति स्म स जीवनमक्षयं
विनमतां[4] समयादभिवर्षताम् ॥ १६ ॥

विजययष्टिमशेषजनार्चितां[5]
त्रिपथगोदधिसंगमरोधसि ।
नरपतिर्निचखान शिलामयी-
मभयदां प्रतिमामिव[6] शाम्भवीम् ॥ १७ ॥

---

१. 'श्रियं गु', २. 'भुजः ।', ३. 'रवाश्र' ग. पाठः. ४. 'मितं स' क. पाठः. ५. 'थो जगतोऽर्चिताम्', ६. 'भा' ग. पाठः.

प्रथमतः क(इ ? यि)मामतिलङ्घये-
दिति नृपेण जनः परिचोदितः।
क इति भिन्नपदं परिकल्पय-
न्नहमहं क्षम इत्यतरन्नदीम् ॥ १८ ॥

अधिकमाश्रितरक्षणदीक्षितं
नयविदेनमशिश्रयदुत्कलः।
तनुरपि प्रथतेऽधिकमाश्रितः
कुसुमगन्ध इवानिलमुत्थितम् ॥ १९ ॥

अथ कलिङ्गमनेकपविग्रहं
भुवि महेन्द्रमिवान्यमुपस्थितम्।
बलभरेण ममन्थ[1] महाम्बुधिं
हरिरिवाद्रिवि[2]रेण नरेश्वरः ॥ २० ॥

स च कलिङ्गनरेन्द्रमहाम्बुधि-
र्भरतबाडववह्निशिखावृतः।
उपचितोऽयमनेकपयोधिभिः
प्रतिससार तमेव कृतोद्यमः ॥ २१ ॥

अथ मिथश्चतुरङ्गमभङ्गुरं
क्षणमवर्तत तुल्यबलं बलम्।
न युधि यावदसौ भरतो धनु-
र्नमयितुं रिपुसैन्यमिवाग्रहीत् ॥ २२ ॥

भरतसायकनिर्दलिताः क्षणं
परिगलद्रुधिरोक्षितविग्रहाः।

---

१. 'र्द', २. 'क' क. ख. पाठः.

दवकृशानुशिखा[1]खचितारुणाः
क्षितिधरा इव रेजुरनेकपाः ॥ २३ ॥

अतिरयेण चचार महा[2]रथः
फलसमाकलितागमनिर्गमः ।
दिशिदिशि भ्रमयन् करिणां घटा
जलमुचां पटलीमिव मारुतः ॥ २४ ॥

स युधि कार्मुकदण्डमिवोद्धतं
नरपतिं भरतः परिलो[3]लयन् ।
करभरेण निपीड्य वशीकृतं
नमयति स्म न खण्डितवानमुम् ॥ २५ ॥

अथ महेन्द्रमहाकटकोदरे
नरपतेर्मणिवप्रशिलातले ।
विलिखिता विजयस्तुतिपद्धति-
र्भुवि नरैर्दिवि कीर्त्तिधरैः सुरैः ॥ २६ ॥

नरपतिः प्रययावथ दक्षिणां
दिशमनेकजनेशनिषेविताम् ।
उदधिपानविमोक्षणकर्मणः
स्वयमगस्त्यमुनेरिव दक्षिणाम् ॥ २७ ॥

मथितमालवकान्ध्रमहोदधिः
स जितकाञ्चिरुदञ्चितविक्रमः ।
अथ ददर्श कवेरसुतां नदीं
जलनिधेरिव बन्धनशृङ्खलाम् ॥ २८ ॥

---

१. 'चकिता', २. 'रथर', ३. 'नो' ग. पाठः। ४. 'लो' क. ख. पाठः।

सलिलकेलिषु चोलमृगीदृशां
कुचविघट्टनयेव कृतश्रमा ।
भरतकुञ्जरकुम्भतटाहृतिं
घनतमामसहिष्ट सरिद्वरा ॥ २९ ॥

नगरपञ्जरनिम्नितविग्रहं
तदनु चोलमृगेन्द्रमसौ नृपः ।
अभयदाननि[1]वर्तितविक्रि[2]यं
नमयति स्म करग्रहणेन तम् ॥ ३० ॥

अथ जयाय स पाण्ड्यमहीपतेः
कटकमाभरणं प्रथितं भुवः ।
कनकसारविनिर्मितमभ्यगा-
न्मणिमयं मणलूरपु[3]राह्वयम् ॥ ३१ ॥

हृदि लुठन्नवमौक्तिकमण्डनां
शफरलोलदृशं कुमुदस्मिताम् ।
बलभरेण ममर्द महीपतिः
प्रियतमामिव रत्नसुवं नदीम् ॥ ३२ ॥

तदनु पाण्ड्यमखण्ड्यपराक्रमं
तनुतरेण रणेन विजित्य सः ।
कनकमौक्तिकरत्नचयाञ्चितं
करमिवाप करं विजयश्रियः ॥ ३३ ॥

जितवता भरतेन यशोर्थिना
विलिखिता निजनामपदाक्षरैः ।

---

१. 'वि' ग. पाठः. २. 'ग्रहं न' क., 'क्रयं न' ख. पाठः.
३. 'समाह्व' ग. पाठः.

विनिहिता विजयाङ्कशिलोदधे-
स्तटभुवि प्रतिमेव जयश्रियः ॥ ३४ ॥

अयमपि क्षितिधारणकर्मणा
क्षितिभृदेव बलेन विलङ्घ्यताम् ।
इति स सह्यमलङ्घयदुच्छ्रितं
कटकदुर्गधरं कनकाश्रयम् ॥ ३५ ॥

तटभुवि स्फुटितोज्झितबीजया
विततया सुरभीकृतमेलया ।
पपुरमुष्य बलानि यथेप्सितं
तदनु सह्यभुवां सरितां जलम् ॥ ३६ ॥

अथ गिरेरिव पक्षपरम्परां
जलनिधेरुपरि प्रविसारिताम् ।
परशुराममहास्त्रविनिर्मिता-
मवततार महीं स महारथः ॥ ३७ ॥

कलितनीतिरसौ[1] किल केरल-
क्षितिपतिः पुनरात्मसमर्पणात् ।
अनुविवेश शशीव दिवाकरं
रुचिरया[2] कलया भरतं विभुम् ॥ ३८ ॥

तदनु पश्चिमसागरपारगं
समधिगम्य स राजकमण्डलम् ।
वसुचयं हरति स्म यथोचितं
न तु निसर्गकृतां श्रियमक्षताम् ॥ ३९ ॥

---

१. 'क' क. पाठः. २. 'कु' ख. ग. पाठः.

यवनसैन्यममन्यत दुर्जयं
निजधनुर्नमनेन विना नृपः ।
न खलु द[1]ग्धुमृते बडवानलं[2]
प्रभवति प्रसभं पयसां निधिम् ॥ ४० ॥

न हि शराः किल केवलमाशुगाः
प्रहरता भरतेन समर्थिताः ।
युधि गताः प्रसभं हृतशेषता-
मसुहृदोऽपि भयेन यदाशुगाः ॥ ४१ ॥

करमवाप नृपो यवनाधिपा-
दभयमात्मपदं च ददौ स्वयम् ।
उपकृतो(पि ? हि) महानुपकारिणा-
मुपकरोति पुनर्द्विगुणोदयम् ॥ ४२ ॥

मधुरसावनभूषु निषेदिवा-
नजिनकम्बलरत्नवतीषु सः ।
अनुबभूव ज[3]यश्रियमूर्जितां
[4]घनरसार्द्रहिमाम्बुहृतश्रमः ॥ ४३ ॥

अथ दिशं द्रविणेशवशीकृता-
मभिजगाम जयाय जनाधिपः ।
क्षितिभृतां कटकं पथि मर्दयन्
वनकरीव बलं महदाश्रितः ॥ ४४ ॥

मथितसिन्धुपतिर्जगृहे श्रियं
मणितुरङ्गमरत्नपुरस्कृताम् ।

---

१. 'दुग्धमृ' ग. पाठः. २. 'ल' क. पाठः. ३. 'मुखश्रि' ग. पाठः. ४. 'सघनसारहि' क. ख. पाठः.

अमितभूमिभृदेष महीपतिः
 स भगवानिव चक्रधरः स्वयम् ॥ ४५ ॥

तदनु हूणगणाधिकृतान्नृपः
 पुरवरादवलिप्तमहाभटात् ।
अहरदेव स सारमनुद्धृता-
 दहिकुलाकुलितादिव चन्दनात् ॥ ४६ ॥

रथतुरङ्गखुराग्रविमर्दितः
 सपदि कुङ्कुमरेणुरराजत ।
नृपतितिग्मरुचेस्तपतः परान्
 गगनवर्त्मनि बाल इवातपः ॥ ४७ ॥

तदनु जङ्गमभूमिभृतां पति-
 र्गिरिमजङ्गमभूमिभृतां पतिम् ।
समतयेव समाचितमत्सरो
 बलभरेण रुरोध जिगीषया ॥ ४८ ॥

द्विरदशृङ्खलया दलितत्वचः
 प्रमथिताः किल भूर्जमहीरुहः ।
विधुतपल्लवपाणिपुटैरलं
 क्षतरुजेव चिराय चकम्पिरे ॥ ४९ ॥

क्षितिभृतः क्षितिभृत्पतिमाश्रिताः
 शरमुचे भरताय करं ददुः ।
न खलु तुङ्गसमाश्रयणं नृणां
 तदधिके परिपन्थिनि साधनम् ॥ ५० ॥

इत्थं दुग्ध्वा गामिमां चापवत्सां
रत्नक्षीरां प्रस्नवार्हां सुखेन ।
गीर्वाणानां पुष्पवृष्टिं दधानो
राज्ञां नाथः स्वां पुरीमाविवेश ॥ ५१ ॥

इति कृष्णविरचिते भरतचरिते एकादशः सर्गः ॥

---

## अथ द्वादशः सर्गः ।

विजित्य पृथ्वीमिति निःसपत्नां
लोकान्तरं जेतुमिव क्षितीशः ।
आवर्त्तयामास तुरङ्गमेध-
माहूय कण्वं मुनिमध्वरज्ञम् ॥ १ ॥

दुःषन्तसूनुर्भरतो हि यष्टा
कण्वः पुनर्योजयिता महर्षिः ।
स्थानं प्रयागः क्रतुरश्वमेध-
श्चतुष्टयं तत् क्रियते फलाय ॥ २ ॥

फलाभिसन्धानमृते चकार
वह्नौ हविस्त्यागमसौ नरेन्द्रः ।
पदं हि लोकोत्तरमात्मनश्चेत्
क्षुद्रं पदं प्रार्थयते न धीरः ॥ ३ ॥

स भूपतिः कर्मसु दीक्षितोऽपि
चकार भङ्ग्या चतुरोऽप्युपायान् ।
साम स्तुतौ दानमथापदाने
भेदं च मैत्रावरुणे च दण्डम् ॥ ४ ॥

---

१. 'गुरुंमे' ग. पाठः.

क्रियां प्रयोज्यां प्रतिपादयत्सु
  प्राप्तेषु तत्रार्थपरेषु तेषु ।
विप्रेषु मन्त्रेषु च तस्य राज्ञो
  यथार्हमर्थप्रतिपत्तिरासीत् ॥ ५ ॥

नूनं नरेन्द्रः सवनं गतोऽपि
  नैव स्वधर्मं विनिहन्तुमैच्छत् ।
स विग्रहे कृष्णविषाणयापि
  कण्डूमसौ येन निरास धीरः ॥ ६ ॥

स सप्ततन्तुं विधिना विधाय
  सदक्षिणं ब्राह्मणतर्पणान्तम् ।
रेजे स राजावभृथार्द्रमूर्त्तिः
  शुद्धाम्बरश्रीः शरदीव चन्द्रः ॥ ७ ॥

समुद्वहद्भिः कनकश्रियं तां
  करप्रसारैः कृतभूरिवर्षैः ।
आपूरयामास स दक्षिणाशा-
  मभ्यार्थिनां सस्यवतामिवार्कः ॥ ८ ॥

अथाहृतं मातलिना मघोनः
  सुवर्णरत्नोपचितं रथाग्र्यम् ।
आलोकयामास स लोकपालः
  पुण्यार्जितं लोकमिवावतीर्णम् ॥ ९ ॥

नूनं गुरुं भारमिमं न वोढुं
  क्षमेयमुर्वीति विशङ्कमानः ।

स मातलिस्तं रथमन्तरिक्षे
निवेशयामास नियम्य वाहान् ॥ १० ॥

विद्योतमानः स मणिप्रभाभि-
र्विद्युद्भिरम्भोद इव स्थिराभिः ।
अग्रे नरेन्द्रस्य सुरेन्द्रसूतः
प्रतोदपाणिः प्रणतोऽवतस्थे ॥ ११ ॥

पाद्यासनाद्यैः स्वयमेव राजा
सम्भावयामास महेन्द्रसूतम् ।
प्रायः प्रभूणामनुजीविनोऽपि
श्लाघ्याधिकारेण भवन्ति मान्याः ॥ १२ ॥

आनन्दसिन्धुस्नपनेन शुद्धा
मन्दस्मितक्षौमपटं वसाना ।
दन्तच्छदश्रीनवकुङ्कुमार्द्रा
वाणी मुखेन्दोर्नृपतेरुदस्थात् ॥ १३ ॥

प्रष्टुं न युक्तं कुशलं मघोनः
सम्भाव्यमन्यत् किमिवेश्वराणाम् ।
अथ प्रतापादिपु तस्य दैत्याः
स्वोच्छेदमिच्छन्ति पतङ्गवृत्त्या ॥ १४ ॥

मन्ये तवाभ्यागमनं महार्थ-
मनुग्रहायैव परं कृतं नः ।
अथात्मदत्तां हरिरस्त्रशिक्षां
दैत्योपमर्देषु दिदृक्षते नः ॥ १५ ॥

तं मातलिः प्रत्यवदन्नरेन्द्रं
सारं समाहृत्य सुरेन्द्रकार्यम् ।
प्रभूतमर्थं प्रभवन्ति वक्तु-
मल्पाक्षरैरेव पदैर्महान्तः ॥ १६ ॥

नित्यावलिप्तैः समरेषु दैत्यैः
पातानवाप्त्या शिलीमुखानाम् ।
आकृष्टपद्मा नलिनीव नागै-
रालोड्यते तैर्नगरी सुराणाम् ॥ १७ ॥

अतस्त्वया दैत्यजयाय जिष्णोः
साह्यं विधेयं दनुजद्विषेव ।
न नन्दको विद्विषतामसिस्ते
नाम्नापि शौरेरियती भिदा ते ॥ १८ ॥

तथेति राज्ये सचिवान् निधाय
निश्शब्दपातं रथमन्तरिक्षे ।
आलम्ब्य चापं स गृहीतचक्रो
हरिर्गरुत्मन्तमिवारुरोह ॥ १९ ॥

उत्कण्ठया यातुमनेन सार्धं
यावत् कटाक्षाः पुरसुन्दरीणाम् ।
उत्पेतुरार्द्राः क्षणमुत्पलाभा-
स्तावद् रथं मातलिरुन्निनाय ॥ २० ॥

अथ प्रतिष्ठानपुराङ्गनाना-
मपाङ्गयष्टिं स विलङ्घ्य राजा ।

आलम्बनायैव कटाक्षवल्ली-
मवाप वृन्दारकसुन्दरीणाम् ॥ २१ ॥

उद्घाटितैर्द्वारकवाटनेत्रै-
रुद्वीक्षमाणामिव कौतुकेन ।
लोलैः प्रनृत्तामिव केतुपङ्क्तैः
पौरन्दरीमाप पुरीं नरेन्द्रः ॥ २२ ॥

सम्भावयिष्यन् नरलोकपाल-
मभ्युद्गमेन त्रिदशाधिनाथः ।
दैतेयरक्ताक्तचतुर्विषाण-
मैरावतं वारणमारुरोह ॥ २३ ॥

अन्योन्यसंघट्टितपत्रपार्श्वौ
विरेजतुस्तौ विशिखां विशन्तौ ।
आकाशवीथीमवगाहमानौ
भास्वन्मृगाङ्काविव तुल्यकालौ ॥ २४ ॥

रत्नोपलादर्शसमुद्वहस्ताः
कल्याणमाल्याभरणा नरेन्द्रम् ।
प्रत्युद्ययुस्तं सुरवारकान्ताः
सञ्चारकल्या इव कल्पवल्ल्यः ॥ २५ ॥

पत्रादवारुह्य नरामरेन्द्रौ
सभां सुधर्मां समवापतुस्तौ ।
उत्तुङ्गचामीकरचारुवप्रां
शुभां सुमेरोरिव केसरीन्द्रौ ॥ २६ ॥

तमर्घ्यपाद्यादिभिरर्चयित्वा
निजासनार्धे विनिवेश्य शक्रः ।
आश्लिष्टमालोक्य यथा ननन्द
सद्यः प्रसूतं न तथा जयन्तम् ॥ २७ ॥

अगाधसत्त्वोऽपि हरिर्बभूव
नरेन्द्रचन्द्रं प्रतिपद्य लोलः ।
आनन्दविभ्रान्तसहस्रनेत्रः
संभ्रान्तपाठीन इवाम्बुराशिः ॥ २८ ॥

आपीतशिष्टाममृतस्य धारा-
मार्द्रस्मितव्याजवतीं विधाय ।
सुखोपविष्टं निजविष्टरार्धे
त्रिविष्टपेन्द्रः पृथिवीन्द्रमूचे ॥ २९ ॥

प्रेयस्तवाभ्यागमनं ममेति
वक्तुं न साक्षात् स्वजनेषु युक्तम् ।
आचारमात्रेण तु वाच्यमेव
पुत्रेऽपि नूनं गृहमभ्युपेते ॥ ३० ॥

निहत्य दैत्यानमरैरवध्यान्
दिवं भवान् भूमिगतो भुनक्ति ।
स्वस्था वयं केवलमाज्ञयैव
बिभर्षि लोकद्वितयं यतस्त्वम् ॥ ३१ ॥

[1]हतावशिष्टाः समरे त्वया ये
स्वपक्षमुत्थाप्य समुत्पतन्तः ।

---

१. 'न' ख. पाठः.

दवाग्निभीता इव खेचरास्ते
भूमेर्दिवं प्राप्य चरन्ति दैत्याः ॥ ३२ ॥

लब्धाश्रयास्ते द्रुहिणप्रसादाद्
देवानभिद्रोग्धुममी यतन्ते ।
वन्यद्रुमोत्थाः खलु हव्यवाहाः
स्वोत्पत्तिवृक्षान् प्रथमं दहन्ति ॥ ३३ ॥

अंशावतारोऽसि हि दैत्यशत्रो-
र्दैत्यानतस्तान् निहनिष्यसि त्वम् ।
को नाम दग्धुं क्षमते पयोधी-
नुषर्बुधं बाडवमन्तरेण ॥ ३४ ॥

इत्युक्तवन्तं भरतो बभाषे
तवा[2]नुभावादसुरान् निहन्मि ।
न हन्ति शातोऽपि शरः सपत्नान्
धनुर्भृतः प्रेरणमन्तरेण ॥ ३५ ॥

गोप्ताथ लोकस्य स दीप्तहेतिः
परान् प्रतापैः परितापयिष्यन् ।
हरेर्नियन्त्रा हरिभिर्निबद्धं
हरिः स्वयं वा रथ[3]मारुरोह ॥ ३६ ॥

नागेन्द्रमारुह्य नगेन्द्रकल्पं
नरेन्द्रमिन्द्रः स्वयमन्वगच्छत् ।
अन्वीयमानः सुमनःसमूहै-
र्दीप्तं नभस्वानिव दाववह्निम् ॥ ३७ ॥

१. 'भ' ख. पाठः. २. 'दा', ३. 'ण' ग. पाठः.

गर्जन्तमुच्चैर्दिवि कालरूपं
द्विधाकृताखण्डलचापदण्डम्[1] ।
घनं घनानामिव दानवानां
सङ्घं तमेते ददृशुः सुरौघाः ॥ ३८ ॥

अथासुराणां मरुतां च तेषा-
मभूदपूर्वो[2] दिवि संप्रहारः ।
अन्योन्यभङ्गप्रतिभङ्गभीमः
कल्पान्तभाजामिव सागराणाम् ॥ ३९ ॥

अङ्गानि चत्वारि मिथो यथास्वं
द्वन्द्वं बभूवुः समरेषु तेषाम् ।
बलानि तुङ्गान्यथवा कुलानि
मिथः समानैः सततं घटन्ते ॥ ४० ॥

परस्परज्याघनघोषमिश्रा
बभूव वृष्टिः शरपातरूपा ।
प्रवर्तयामास च सा भटाना-
मङ्गेषु तेषां रुधिरै[3]स्स्रवन्ती[4]म् ॥ ४१ ॥

गुणानुविद्धापि धनुर्धराणां
दोषानुविद्धा विशिखावली सा ।
सपक्षपातापि विपक्षपाता
तीक्ष्णापि तेषां हृदयङ्गमाभूत् ॥ ४२ ॥

प्रयोगसंहारपरम्परासु
निवर्तनावर्तनघट्टितानि ।

---

१. 'ण्डः', २. 'तानमोघावे' ख. पाठः. ३. 'रं', ४. 'न्ती' ग. पाठः.

अस्त्राणि तेषां प्रतिहन्यमाना-
न्यासन् मिथो योद्धुमिवोद्यतानि ॥ ४३ ॥

कर्मारवह्नौ बहुशोऽवगाहा-
दन्तर्निगीर्णानिव विष्फुलिङ्गान् ।
अन्योन्यसङ्घट्टनया भटानां
कृशानुलेशान् मुमुचुः कृपाणाः ॥ ४४ ॥

तेषां मदोद्भ्रान्तमधुव्रतेषु
प्रबुद्धताम्रोदरपुष्करेषु ।
करीन्द्रकासारकुलेषु पेतुः
कुन्ताः शकुन्ता इव पक्षपाताः ॥ ४५ ॥

तुरङ्गवाहाश्चतुरं तुरङ्गै-
श्चक्रुश्चरन्तो युधि पञ्च धाराः ।
शस्त्रैश्च शातैः शतधारकल्पै-
र्धाराशतं शत्रुषु लोहितानाम् ॥ ४६ ॥

मुहुर्मुहुर्दैत्यवरान् व्रजन्ती
तथामरानप्यसकृद् भजन्ती ।
गतागताभ्यां किल साम्पराये
ययौ जयश्रीश्चिरमव्यवस्थाम् ॥ ४७ ॥

मायाप्रयोगेषु कृताभियोगान्
दैत्यान् परोदञ्चितवीर्यगर्वान् ।
हन्तुं न शेकुस्त्रिदशाः सशक्रा-
स्तानिन्द्रियार्थानिव देहभाजः ॥ ४८ ॥

न दैत्यवक्षोभिदुरं बभूव
रणे प्रहर्तुर्भिदुरं मघोनः ।
स वारणस्तस्य न वारणोऽभू-
दैरावतः क्षीणविषाणकोटिः ॥ ४९ ॥

विक्षोभयन्तीं सुरवाहिनीं तां
मदेन शैलानपि कम्पयन्तीम् ।
स राजसिंहः सहसा प्रसह्य
दैत्येन्द्रमातङ्गघटां रुरोध ॥ ५० ॥

स मातलिं चोदय चोदयाश्वा-
निति स्फुटोज्जृम्भितचापघोषः ।
अमोघमेकं समधत्त बाणं
दैत्यान्तकं देव इवेन्दुमौलिः ॥ ५१ ॥

स तेन मुक्तेन निकृत्तकण्ठैः
सुरद्विषामाननपुण्डरीकैः ।
अभ्यर्चयामास कृतान्तमग्रे
दैत्योपहारैरिव तर्पयिष्यन्[1] ॥ ५२ ॥

आच्छादयामासुरमुं पृषत्कै-
रच्छिन्नपातैररयः सुराणाम् ।
गर्जन्त एवाद्रिमुदस्तशृङ्ग-
मासारावर्षैरिव वारिवाहाः ॥ ५३ ॥

निर्भिन्नदेहावरणान्निजाङ्गा-
न्निर्धूय नीडा(मि ? दि)व पत्रिणस्तान् ।

१. 'तापयि' ग. पाठः.

छिन्दन् संख्यातुमिवैष दैत्यान्
प्रत्येकमेतान् विशिखैर्जघान ॥ ५४ ॥

छिन्नैः शिरोभिर्दितिनन्दनानां
छन्ना रणक्षोणिरकारि राज्ञा ।
मधुद्रवामोदितभीमवक्त्रै-
र्मृत्योः कपालैरिव कीर्यमाणा[1] ॥ ५५ ॥

संहत्य दैत्याः परिवेष्ट्य पत्रै-
रेनं निजघ्नुर्निशितैः पृषत्कैः ।
रराज सोऽपि क्षतजोक्षिताङ्ग
सन्ध्याघनच्छन्न इवोष्णरश्मिः ॥ ५६ ॥

अथ क्षणोदस्तशिलीमुखोऽसौ
निकृत्तपद्मानन[2]वीतशोभान् ।
कबन्धशेषान् दितिजानसंख्यान्
पद्माकरान् वन्यकरीव चक्रे ॥ ५७ ॥

अन्यानिषून्मुञ्चत एव दैत्यान्
निकृत्तकण्ठानकरोन्नरेन्द्रः ।
ते संपतन्तो मुमुचुः पुरस्तात्
प्राणानिषून्[3] वा किमु सिंहनादान् ॥ ५८ ॥

एकेन मूर्धा नृपबाणलूनः
पश्चान्निरस्तः सहसा करा[4]भ्याम् ।
मानं दधानेन पुरः प्रपाता-
दाशङ्कमानेन रिपौ प्रणामम् ॥ ५९ ॥

---

१. 'णा', २. 'पनीत', ३. 'नमून् वा', ४. 'रेण ।' ग. पाठः.

अथानिलैरश्मरजोम्बुगर्भै-
मायामयैस्तं दितिजाः प्रजह्रुः ।
अपाहरत् तान् निखिलान् नृपोऽस्त्रै-
रस्त्रैः सहस्रांशुरिवान्धकारान् ॥ ६० ॥

निर्मुक्तपत्रिप्रकरानुदग्रान्
वेगं शराणां प्रविधाय भूयः ।
निष्पत्रतामेष निनाय शत्रू-
नारण्यवृक्षानिव दाववह्निः ॥ ६१ ॥

छिन्नायुधाश्छिन्नपरिच्छदास्ते
सन्ना बभूवुर्भरतेन दैत्याः ।
कोदण्डपाणिस्तमृते न कश्चि-
च्छत्रून् नियन्तुं खलु दुर्विनीतान् ॥ ६२ ॥

ब्रह्मास्त्र[2]मुख्यानि महास्त्रजाला-
न्यस्मै सरोषं ससृजुः सपत्नाः ।
अस्त्रैः स तैरेव रुरोध तानि
[3]महोन्तराणीव महोभिरर्कः ॥ ६३ ॥

स कण्टकान् दानववंशजातान्
पीडाकरानैन्द्रपदे नितान्तम् ।
उद्धृत्य शस्त्रैरविपह्यपातान्
युद्धस्य पारं भरतो जगाम ॥ ६४ ॥

मुक्तानि तस्मिन् पुरसुन्दरीभि-
र्मन्दारमाल्यानि मनोहराणि ।

---

१. 'ज्जन्तुर्निय' ग. पाठः. २. 'दिपैशाचकृतावसानान्यस्त्राण्य-
थस्मै दितिजः ससर्ज ।', ३. 'तेजोन्तराणीव निजैर्विवस्वान्' क. पाठः

निलीननिष्कम्पमधुव्रतानि
निमेषहीनानि विलोचनानि ॥ ६५ ॥

नखक्षतानीव शरक्षतानि
वीर्यश्रियस्तं दधतं नरेन्द्रम् ।
आलिङ्ग्य हर्षेण मुहुर्महेन्द्र-
स्तं सम्प्रहारश्रममुज्जहार ॥ ६६ ॥

आपृच्छ्य वास्तोष्पतिमर्हणान्ते
भोक्तुं भुवं भूमिपतिः प्रतस्थे ।
नूनं जगद्रक्षणदीक्षितानां
न जातु विश्राममुपैति चेतः ॥ ६७ ॥

अथाम्बरे साधु रथं नियच्छन्
नरेश्वरं मातलिरित्युवाच ।
पश्यार्णवं वीचिभुजैर्धरित्री-
मालिङ्ग्य सव्रीडमिवापयान्तम् ॥ ६८ ॥

तप्तानि भूयस्तपनातपेन
त्वद्यानयोग्यानि विधातुकामः ।
मन्ये तरङ्गैः शिशिरैरुदस्तैः
प्रक्षालयत्येष नभस्तलानि ॥ ६९ ॥

उपायनीकृत्य महाधनानि
रत्नानि वेलोपरि सञ्चितानि ।
प्रसार्य तीरेषु तरङ्गबाहून्
नमन्निवाभाति पयोनिधिस्त्वाम् ॥ ७० ॥

आयाति याति द्रुतमुच्चिनोति
तृणानि काष्ठानि जहाति भूयः ।
अनर्थकानेष तनोति शब्दा-
नुद्वेलमुन्मत्त इवाम्बुराशिः ॥ ७१ ॥

और्वाग्निसन्तापमलीमसोऽपि
निर्घातवातैः परुषीकृतोऽपि ।
अगस्त्यपीतक्वथितोज्झितोऽपि
न जातु लावण्यमसौ जहाति ॥ ७२ ॥

आकृष्टशार्ङ्गः श्रितशङ्खचक्रः
सारं मणीनां हृदये दधानः ।
अमेयमन्तर्भुवनं दधानो
नारायणस्यानुकरोति चिह्नम् ॥ ७३ ॥

अस्यानुतीरं कलहंसमाला
वेलातरङ्गेषु विगाहमाना ।
मुक्ताङ्कुराग्रं दशति प्ररूढ-
मरूच्छं बिसच्छेदविशङ्कयेव ॥ ७४ ॥

न क्षीयते बाडववह्निनासौ
न वर्धते प्रावृषि निम्नगाभिः ।
सत्त्वाधिकाः सत्स्वपि कारणेषु
नूनं महान्तो नहि विक्रियन्ते ॥ ७५ ॥

जलाशयोऽसौ न विचारशून्यः
सुधाकरो न क्षयमेति भूयः ।

भङ्गाकुलात्मा न विलङ्घ्यतेऽन्यैः
प्रमाणहीनो न जनैरदृश्यः[1] ॥ ७६ ॥
अमुष्य वीचीनिचयैरुदस्तं
निपीय पाथो लवणं पयोधेः ।
गुहामुखैः सोढुमशक्नुवन्तः
सद्यो वमन्तीव तटान्तशैलाः ॥ ७७ ॥
सरित्प्रवाहोल्बणशृङ्खलाभि-[2]
र्वेलाचलालाननियन्त्रिताङ्गः ।
नमत्यसावुन्नमति क्षणेन
वारांनिधिर्मत्त इव द्विपेन्द्रः ॥ ७८ ॥
अमानभूमिर्बहुमानभूमिं
सदा शयालुः सततं प्रबुद्धम् ।
असुं प्रजानामविशेषबन्धुं
विशेषबन्धुः पुरुषोऽधिशेते ॥ ७९ ॥
अमुष्य कुक्षौ भुवनानि कृत्वा
निक्षिप्य नाभीकमले निषण्णः ।
पुनस्तदादित्सुरिवाब्जयोनिः
साम्ना मुहुः स्तौति तमेव देवम् ॥ ८० ॥
अत्रार्णवे श्यामलवर्णकान्तिः
शेषे शयानः कमलासहायः ।
कालाम्बुवाहः कलधौतशैले
विद्युल्लताश्लिष्ट इवावभाति ॥ ८१ ॥

१. (शृङ्गचः ? शङ्कयः), २. 'उज्वलशृ' ग. पाठः.

श्रीमन्तमारोपितविश्वभारं
पश्याम्बुराशौ हरिपोतमेनम् ।
यन्नाभिपद्मोच्छ्रितकूपदण्डे
वसन् विरिञ्चः खलु कर्णधारः ॥ ८२ ॥

इति ब्रुवन्नेव नृपं निनाय
पुरीं परार्ध्यां पुरुहूतसूतः ।
उद्घाटितद्वारकपाटनेत्रै-
रुद्वीक्ष्यमाणामिव तस्य मार्गम् ॥ ८३ ॥

पुरस्क्रियान्ते पुरुहूतयन्तु-
र्दत्त्वा कथंचिद् गमनाभ्यनुज्ञाम् ।
आलोकदानेन शशीव लोक-
मानन्दयामास विशामधीशः ॥ ८४ ॥

बिभ्राणः समकरभूषणां धरित्री-
मासीनां फणिपतिविष्टरे विशालाम् ।
दैत्यारेस्तनुमिव योगमात्रसिद्धां
राजेन्द्रः स सुखमुवास वासवश्रीः ॥ ८५ ॥

इति श्रीकृष्णाचार्यविरचिते भरतचरिते द्वादशः सर्गः ॥

भरतचरितं समाप्तम् ।

---

शुभं भूयात् ।

## READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः (Kavya) Syânandûrapuravarnanaprabandha by H. H. Svâti Sri Râma Varma Mahârâjah, with the commentary Sundarī of Râjarâja Varma Koil Tampurân. | 2 | 0 | 0 |

### Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna (Second Edition). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dîkshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî. | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Niti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakra kavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I. 1st & 2nd Sargas). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas). | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana. | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th, 7th & 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I. 1st Kânda). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Apastamba with Vivarana of Srî Sankara Bhagavat Pâda. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part II. 2nd Kânda 1—6 Vargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya). | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvatî. (Part I). | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः ( Alankâra ) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part III. 2nd Kânda 7—10 Vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part IV. 3rd Kânda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Srî Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Saraswatî (Part III). | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânandavimarsinî of Sivarâma. | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः (Stuti) by Srî Laghubhattâraka with the commentary of Srî Râghavânanda. | 0 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvati (Part IV). | 1 | 8 | 0 |
| No. 62—सर्वमतसंग्रहः (Sarvamatasangraha). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् (Kâvya) by Bharavi with the commentary Sabdârthadîpika of Chitrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः (Kâvya) by Kâlidasa with the commentary Pradîpa of Dakshinâvartanatha. | 1 | 0 | 0 |
| No. 65—मयमतम् (Silpa) by Mayamuni. | 3 | 8 | 0 |
| No. 66— महार्थमञ्जरी (Darsana) with the commentary Parimala of Maheswarânanda. | 2 | 8 | 0 |
| No. 67—तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara (Part I. 1–6 Patalas). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः (Agama) by Srî Bhojadeva with the commentary Tâtparyadîpikâ of Srî Kumara. | 2 | 0 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isânasivagurudevamisra (Part I. Sâmânyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः (Part I). | 2 | 8 | 0 |
| No. 71— तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara (Part II. 7—12 Patalas). | 3 | 8 | 0 |
| No. 72— ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part II. Mantrapada). | 4 | 0 | 0 |
| No. 73 — ईश्वरप्रतिपत्तिप्रकाशः (Vedanta) by Sri Madhusudanasarasvati. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 74— श्रीयाज्ञवल्क्यस्मृतिः (Dharmasâstra) with the commentary Bâlakrîdâ of Visvarûpâchârya. (Part I—Âchâra and Vyavahâra Adhyâyas). | 4 | 0 | 0 |
| No. 75—शिल्परत्नम् (Silpa) by Srîkumâra (Part I). | 3 | 4 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः (Part II). | 3 | 4 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part III. Kriyapada 1—30 Patalas). | 3 | 4 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् with the commentary Anavila of Haradattacharya. | 5 | 0 | 0 |
| No. 79—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part I—1 & 2 Adhikaranas). | 8 | 0 | 0 |
| No. 80—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part II—3 to 7 Adhikaranas). | 8 | 0 | 0 |
| No. 81—श्रीयाज्ञवल्क्यस्मृतिः (Dharmasastra) with the commentary Bâlakrîda of Visvarûpâchârya (Part II. Prâyaschittâdhyâya). | 3 | 12 | 0 |
| No. 82—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part III—8 to 15 Adhikaranas). | 8 | 0 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part IV. Kriyapada 31–64 Patalas and Yogapada). | 4 | 0 | 0 |
| No. 84—आर्यमञ्जुश्रीमूलकल्पः (Part III). | 2 | 12 | 0 |
| No. 85—विष्णुसंहिता (Tantra). | 4 | 8 | 0 |